चतुरस्रं तथा बिन्दुषट्कयुक्तं च वृत्तकम् ॥ ४२ ॥
अर्धचन्द्रं त्रिकोणं च रूपाण्येषां क्रमेण तु ।
पीतो धूम्रस्तथा श्वेतो (१)रक्तो रूपं च कीर्तितम्॥४३॥

---

रूपं बिन्दुरिति ख्यातं, रूपातीतन्तु (२)चिन्मयम् ॥ इति । पीठाश्चत्वारः पिण्डपदरूपरूपातीतशब्देन तत्तत्स्थानानि आधारहृदयभ्रूमध्यब्रह्मरन्ध्राणि लक्ष्यन्ते । तेन क्रमात्तेषु स्थानेषु स्थि(३)तास्तत्तन्मया इत्यर्थः । तेषां पृथिवीवायुसलिलतेजोरूपतां च सूचयन् (४)तत्स्वरूपभेदमाह—चतुरस्रमिति ।

चतुरस्रं चतुरस्ररूपः कामरूपपीठः भूतत्त्वमित्यर्थः, भूमण्डलस्य चतुरस्ररूपत्वात् । बिन्दुषट्कं च वृत्तकम् पूर्णगिरिपीठः, षड्बिन्दुयुक्तवृत्तरूपः वायुतत्त्वमित्यर्थः ; वायुमण्डलस्य (५)षडावर्तवद्वृत्तरूपत्वात् । अर्ध(६)चन्द्रं जालन्धरपीठः अर्धचन्द्ररूपः अप्तत्त्वमयः अम्मण्डलस्यार्धचन्द्ररूपत्वात् । त्रिकोणम् ओड्याणपीठः त्रिकोणरूपः तेजस्तत्त्वमयः, अग्निमण्डलस्य त्रिकोणरूपत्वात् । क्रमेण कामरूपादीनां(७) पीठानामेतानि रूपाणीत्यर्थः । अत्र गगनतत्त्वस्य अरूपत्वान्निरवयवत्वाच्चानुक्तिः । पीठानामेव क्रमेण वर्णानाह—पीत इ-

---

(१) 'रक्तरूपश्च कीर्तितः' इति कपाठः ।
(२) भास्कररायोद्धृतः सेतुबन्धीयः 'निष्कलम्' इति पाठोऽत्र साधुः प्रतीयते ।
(३) 'स्थिताः । अतस्तत्तन्मया' इति कपाठः ।
(४) 'तत्त्वरूप' ख०
(५) 'षडावृत्ततद्वृत्ततद्वृतरूपत्वात्' इति के ।
(६) चन्द्रः जालन्ध' इति कपाठः ।
(७) 'रूपादिपीठानामेव तानीत्यर्थः' क०

स्वयम्भुर्बाणालिङ्गश्च इतरं च परं पुनः ।
पीठेष्वेतानि लिङ्गानि संस्थितानि वरानने ॥४४॥

---

त्यादिना ।
पृथिवीवायुसलिलतेजसां क्रमेण पीतधूम्रश्वेतरक्तवर्ण-त्वात्पीठानामपि त एव वर्णा इत्यर्थः । अवयवार्थः स्पष्टः । अत्र भूतानाम् अक्रमः पीठा(१) नुसारेण । पीठानां (२)त्वा-न्नायभेदेन क्रमस्य नियमात् ॥ ४३ ॥

पीठेषु लिङ्गान्याह–स्वयम्भुरिति । लीनं बाह्येन्द्रियागो-चरं चिद्रूपमर्थं गमयन्तीति लिङ्गानि । मनोबुद्ध्यहङ्कारचित्तात्म-कानि कामरूपादीनि चित्स्फुरत्ताधारत्वात्पीठानि । एतेष्वन्तः-करणचतुष्टयरूपेषु तत्तद्वृत्तिचतुष्टयमयानि लिङ्गानि स्वयम्भ्वा-दीनि वसन्तीत्यर्थः । एतत्सर्वं मया सौभाग्य(३)सुभगो-दये प्रपञ्चितम् । यथा–

पुनरेव कामपीठे तदग्रकोणे स्थिते मनोरूपे ।
प्रतिफलितं तज्ज्योतिः स्वयम्भुलिङ्गं समीहितं सद्भिः ॥
दक्षिणकोणेऽहङ्कृतिरूपे जालन्धरे तु सङ्क्रान्तम् ।
परधामबाणलिङ्गञ्जातं सङ्क्रान्त्युपाधिभेदवशात् ॥
मध्यत्रिकोणकोणे वामे श्रीपूर्णपीठमेतस्मिन् ।
बुद्धिमये परतेजः प्रतिफलितन्त्वितरालिङ्गतां यातम् ॥
चित्तमये श्रीपीठे ज्योतिर्बिन्दौ(४) यदस्य सङ्क्रान्तम् ।
प्रतिफलितं परधाम्नः परलिङ्गं तत्प्रकीर्त्यते प्राज्ञैः ॥ इति॥४४

---

(१) 'नुरूपेण' इति खपाठः ।
(२) 'त्वात्म' इति खपाठः ।
(३) 'सुधोदये' इति खपाठः ।
(४) 'बिन्दोस्तदस्य' इति खपाठः ।

हेमबन्धूककुसुमशरच्चन्द्रनिभानि तु ।
स्वरावृतं त्रिकूटञ्च महालिङ्गं स्वयम्भुवम् ॥४५॥
कादितान्ता(१)क्षरोपेतं बाणलिङ्गं त्रिकोणकम् ।
कदम्बगोलकाकारं थादिसान्ताक्षरावृतम् ॥४६॥
सूक्ष्मरूपं समस्तार्णवृतं परमलिङ्गकम् ।
बिन्दुरूपं परानन्दकन्दं नित्यपदोदितम् ॥ ४७ ॥

---

लिङ्गानां स्वरूपं (२)पीतादिवर्णान् वैखरीवर्णांश्च विभज्याह—हेमबन्धूकेति । हेमानिभं पीतवर्णं त्रिकूटं बिन्दुत्रयकूटरूपं, स्वरावृतम् अकारादिषोडशस्वरावृतं स्वयम्भुलिङ्गम् । बन्धूककुसुमनिभं रक्तवर्णं त्रिकोणरूपं कादितान्ताक्षरवृतं बाणलिङ्गम् । शरच्चन्द्रनिभं श्वेतवर्णं कदम्बगोलकाकारं कदम्बकुसुमगोलकरूपं थादिसान्ताक्षरावृतम् इतरलिङ्गम् । परालिङ्गस्य परतेजोरूपत्वादवर्णत्वं सूक्ष्मरूपम् अतीन्द्रियगोचरम्, अत एव बिन्दुरूपं समस्तार्णवृतम् । आदिक्षान्त (३)पञ्चाशदक्षरवृतं परलिङ्गं परानन्दकन्दं पराया अक्षरादिरूपायाः पश्यन्त्यादिशाखावत्या लतायाः आनन्दमयकन्दं, नित्यपदोदितं नित्यत्वञ्च मातृकाया उत्पत्तिविनाशरहितत्वात, पदात् विश्वमुमुक्षुमनःप्राप्यात् उदितं प्रथमस्पन्दरूपतया ॥ ४५ ॥ ४६ ॥ ४७ ॥

एतानि सर्वाण्यपि बीजत्रययुक्तायास्तुरीयविद्यायाः वा-

---

(१) 'क्षरवृतं' खपुस्तके०
(२) 'पीठानि वर्णान्' इति खपाठः ।
(३) 'क्षान्तैकपञ्चा' कपाठः ।

बीजत्रितययुक्तस्य सकलस्य मनोः पुनः ।
एतानि वाच्यरूपाणि कुलकौलमयानि तु ॥ ४८ ॥
जाग्रत्स्वप्नसुषुप्त्याख्यतुर्यरूपाण्यमूनि तु ।
अतीतन्तु परन्तेजः स्वसंविदुदयात्मकम् ॥ ४९ ॥

---

च्यरूपाणीत्याह—बीजत्रितयेति । एतानि शक्तिचतुष्टयं मातृकाचतुष्टयं मध्यकोणचतुष्टयं पीठचतुष्टयं लिङ्गचतुष्टयश्चेति, एतानि सर्वाणि बीजत्रययुक्तस्य सकलस्य मनोः । वाग्भवकामराजशक्तिबीजसमेतायाः (१)समष्टिरूपायास्तुरीयविद्यायाः वाच्यरूपाणि, विद्या वाचिका, एतानि सर्वाणि वाच्यानि । अत एव (२)चतुर्मयी तच्चतुष्टयरूपिणीयं विद्येत्यर्थः वाच्यवाचकयोरभेदात् । कुलं मेयमातृलक्षणं, कौलं तत्समष्टिस्तन्मयान्यपीत्यर्थः ॥ ४८ ॥

अमूनि पूर्वोक्तानि सर्वाणि चतुरात्मिकानि जाग्रदादिमयानीत्याह—जाग्रदिति । जाग्रत् जागरितदेहेन्द्रियव्यवहारः, अन्तःकरणमात्रव्यवहारः स्वप्नः, सर्वेन्द्रियोपरतिः सुखवन्मात्रपरामर्शः सुषुप्तिः । तुरीयं चैतन्यमात्र(३)व्याप्तिः । अत्रैव वक्ष्यति—

वन्हौ देवि महाजाग्रदवस्था त्विन्द्रियद्वयैः ।
( यो० हृ० सं० ३ श्लो० १८५ )

इत्यादिना । पूर्वं चक्रस्य चतुरात्मतामुक्त्वा तन्मध्ये बैन्दवनिवासिन्याः स्वसंविदः तदतीतरूपतामाह-अतीतमिति ।

---

( १ ) 'यास्तत्सम' कपुस्तके ।
( २ ) 'एव तच्चतुष्टय' इत्येव खपाठः ।
( ३ ) 'मात्राभिव्यक्तिः' इति कपुस्तके ।

स्वेच्छाविश्वमयोल्लेखखचितं विश्वरूपकम् ।

---

अतीतं जागरितादिदशाचतुष्टयातीतम्, अत एव परं विश्वोत्तीर्णं विश्वोत्तरत्वात्, किञ्च परमनुत्तरं प्रकाशरूपम् । अत्र श्रुतिः "तदेव ज्योतिषां ज्योतिः" इति । स्वसंविदुदयात्मकं सर्वप्राणिष्वात्मतया स्थितम् । तदुक्तं नवशतीशास्त्रे—

अनन्तं परमं ज्योतिः सर्वप्राणिहृदि स्थितम् ॥ इति ॥ ४९॥

चक्रस्य पुनर्वासनान्तरकथनाय विश्वातीतं वस्तु कथयित्वा वक्तव्यां वासनामाह—स्वेच्छेति । विश्वमयोल्लेखः विश्वं षट्त्रिंशत्तत्त्वात्मकं तन्मय उल्लेखः उल्लिख्येत इति उल्लेखः चित्रं (१)तेन स्वेच्छया विश्वमयोल्लेखः, तेन खचितं व्याप्तं स्वेच्छातूलिकयाऽऽत्मभित्तौ ( (२)मायाचित्रमुल्लिखतीत्यर्थः । तदुक्तमीश्वरप्रत्यभिज्ञायाम्—"स्वेच्छया स्वभित्तौ ) विश्वमुन्मीलयति"इति । अत्र (३)प्रामाणिकवचनञ्च—

जगच्चित्रं समालिख्य स्वेच्छातूलिकयाऽऽत्मनि ।

स्वयमेव समालोक्य प्रीणाति भगवान् शिवः ॥ इति ।

विश्वरूपकम् अत एव शिवादिक्षित्यन्तरूपेण परिणमत इत्यर्थः, यथा क्षीरं दध्याकारेण परिणमते तथा चिच्छक्तिरेव सर्वाकारेण परिणमते । तदुक्तं प्रत्यभि(४)ज्ञायाम्—"चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" इति ।

---

(१) 'तेन स्वेच्छाविश्वमयोल्लेखेन खचितम्'इति खपुस्तके । वस्तुतः 'चित्रम् । स्वेच्छया विश्वमयोल्लेखः तेन खचितम्' इति साधुतया प्रतिभास्यति ।

(२) कंसान्तर्गतो ग्रन्थः खपुस्तके नास्ति ।

(३) 'प्रमाणव' ख०

(४) 'ईश्वरसंहितायाम्' कपुस्तके ।

चैतन्यमात्मनो रूपं निसर्गानन्दसुन्दरम् ॥ ५० ॥
मेयमातृप्रमामानप्रसरैः सङ्कुचत्प्रभम् ।
शृङ्गाटरूपमापन्नमिच्छाज्ञानक्रियात्मकम् ॥ ५१ ॥

---

तेन किमाया(१)तं परमशिवस्येत्यत आह—चैतन्यमिति । चैतन्यं चिद्विमर्शशक्तिः आत्मनः प्रकाशात्मनः परशिवस्य रूपं निसर्गानन्दसुन्दरं तत्सामरस्येन सहजानन्दोल्लासादखिलस्य स्पृहणीया विमर्शशक्तिः । प्रकाशात्मपरशिवेन सामरस्याद्विश्वं सृजति न तु केवला यथा न केवलेन तुषेणाङ्कुरो जायते, नापि तण्डुलेन, किन्तूभाभ्यामयुतसिद्धसम्बन्धशालिभ्याम् । तदुक्तं स्वच्छन्दसङ्ग्रहे—

शिवाऽभिन्ना परा शक्तिः सर्वकर्मशरीरिणी । इति ॥ ५० ॥

तदेवाह—मेयेति । मेयं प्रमेयं प्रमाविषयः, सम्यगनुभवः प्रमा तद्वान् प्रमाता, मानं प्रमाणं प्रमाकरणं प्रमाणम् । तदुक्तं तन्त्रान्तरे—

मितिः सम्यक्परिच्छित्तिस्तद्वत्ता च प्रमातृता ।
तदयोगव्यवच्छेदः प्रामाण्यङ्गौतमे मते ॥ इति ।

निर्विकल्पकरूपायाः स्वसंविदो मातृमेयप्रमाप्रमाणरूपेण विकल्पात्मना प्रसर एव सङ्कोचः । शिवस्य प्रकाशात्मनो (२)दीपस्य शक्तिर्विमर्शाख्यैव प्रभा, सा निर्विकल्पात्मना विश्वाकारा मेय-मातृ-प्रमा-प्रमाणभेदैः सङ्कुचद्रूपा तदा शिवोऽपि सङ्कुचद्रूपः । एतदुभयमिच्छाज्ञानक्रियात्मकम् । इच्छादिवामादिशक्त्यंश(३)भेदेन शृङ्गाटरूपमापन्नं त्रिकोणरूपेण परिणतम् ॥ ५१ ॥

---

(१) 'तं देवस्ये' ख० (२) 'जीवस्य' ख० (३) 'भेदभिन्न' ख०

विश्वाकारप्रथाधारनिजरूपशिवाश्रयम् ।
कामेश्वराङ्कपर्यङ्कनिविष्टमतिसुन्दरम् ॥ ५२ ॥
इच्छाशक्तिमयं पाशमङ्कुशं ज्ञानरूपिणम् ।
क्रियाशक्तिमये बाणधनुषी दधदुज्ज्वलम् ॥ ५३ ॥

---

पूर्वं [ "बीजत्रितययुक्तस्य सकलस्य मनोः पुनः" ( यो० हृ० सं० १ श्लो० ४८ ) इत्यत्र कामकलादिकाया विद्यायाः श्रीचक्रहेतुभूतत्रिकोणमयपीठादिचतुर्मयतामुक्त्वा इदानीं देवताया अपि तन्मयताभावनामुक्तवानिति भावः । तदेव विवृणोति—"विश्वाकारप्रथाधार" ( यो० हृ० सं० १ श्लो० ५२ ) इत्यादि "तदीयशक्तिनिकरस्फुरदूर्मिसमावृतम्" ( यो० हृ० सं० श्लो० ५९ )इत्यन्तेन ।

विश्वाकारप्रथा षट्त्रिंशत्तत्त्वात्मना परिणता विमर्शशक्तिः तस्या आधारः, निजरूपं तात्त्विकं रूपं शिवः प्रकाशात्मकः स एवाश्रयः आधारो यस्य तद्विश्वाकारप्रथाधारनिजरूपशिवाश्रयं परं तेजः कामेश्वराङ्कपर्यङ्कनिविष्टं कामेश्वरः प्रकाशात्मकः शिवस्तस्याङ्कपर्यङ्कनिविष्टं विमर्शशक्तिरूपम् । सुन्दरम् अत्यन्तसुभगं सर्वैः स्वस्वात्मतया स्पृहणीयत्वात् ॥ ५२ ॥

इच्छाशक्तिरेव पाशः बन्धहेतुत्वात्, ज्ञानशक्तिरेव अङ्कुशं मनोमयगजस्य नियामकत्वात् क्रियाशक्तिमये बाणधनुषी ।

शब्दस्पर्शादयो बाणा मनस्तस्याभवद्धनुः ।

इति वचनात् । शब्दादिबाणानां मनसा धनुषा सह संयोजनं क्रियाशक्तेरेव व्यापारः । अत्र इच्छाशक्तिमयं पाशम्, ज्ञानशक्तिमयमङ्कुशम्, क्रियाशक्तिमये बाणधनुषी । एव-

आश्रयाश्रयिभेदेन अष्टधा भिन्नहेतिमत् ।
अष्टारचक्रसंरूढं नवचक्रासनस्थितम् ॥ ५४ ॥

---

मायुधचतुष्टयं स्वेच्छागृहीतकामकलामयावयवविग्रहबाहुचतुष्टयेन दधदुज्ज्वलश्चिदात्मकत्वात् ॥ ५३ ॥

आश्रयः कामेश्वरः, आश्रयि कामेश्वर्याख्यम्परं तेजः । एवमाश्रयाश्रयिभेदेन अष्टधाभिन्नहेतिमत् हेतिरायुधम् आश्रयस्य चत्वार्यायुधानि आश्रयिणश्चत्वारि चेति अष्टधाभिन्नहेतिमत् । (१)कोऽर्थः ? परमशिव एव प्रकाशविमर्शात्म(२)ना निजावंशौ विभज्य कामेश्वरः कामेश्वरी (३) भूत्वा पाशाङ्कुशधनुःशरान् पुंस्त्रीभेदेनाष्टौ धृत्वा आश्रयाश्रयिभावेन स्वरमयमध्यत्रिकोणमध्यगतसदाशिवाख्यबैन्दवचक्रे तुरीयबिन्दुमये परलिङ्गे निवसतीत्यर्थः ।

इदमेव मिथुनं नवधा विभज्यात्मानं नवचक्रेषु स्थितमित्याह—अष्टारेति । पूर्वोक्तक्रमेण तदेव वामादी(४)च्छाशक्तिमयं त्रिकोणमेव त्रिधा विभिन्नं द्विशक्त्येकवह्निभेदेनाष्टारचक्रमभूत् । पुनस्त(५)देव त्रिपदं वह्निशक्तिरूपं च भूत्वा नवचक्रमभूत् । एवंरूपं श्रीचक्रं स्वयमेवाष्टारचक्रम् ।

(६)चितिश्चैत्यं च चैतन्यं चेतनाद्वयकर्म च ।
जीवः कला च देवेशि सूक्ष्मं पुर्यष्टकं मतम् ॥

---

(१) 'कोऽर्थः' इति खपुस्तके नास्ति ।
(२) 'त्मकौ' इति खे ।
(३) 'इति भूत्वा' इति खे ।
(४) 'दीच्छादिमयं' खे ।
(५) 'तदेव शक्तिरूपं' इत्येव खपुस्तके पाठः ।
(६) 'चितिश्चित्तं च' इति खपाठः ।

एवंरूपं परं तेजः श्रीचक्रवपुषा स्थितम् ।

---

इति स्वच्छन्दसंग्रहोक्तरीत्या निजसूक्ष्मं पुर्यष्टकं विभज्याष्टारचक्रं वशिन्यादिरूपेण संरूढमित्यर्थः । नवचक्रासनास्थितम् । एवं रूप (१)बिन्दोः सकाशात् मिथुनमेव निजाधारनवकं नवचक्रत्वेन विभज्य निजनादशक्तिनवकं नवचक्रेश्वरीरूपेण संपाद्य स्थितम् ।

"इच्छादिशक्तित्रितयं पशोः सत्त्वादिसंज्ञकम् ।
महत्त्र्यस्रं चिन्तयामि गुरुवक्त्रादनुत्तरात् ॥
(२)अष्टारव्यपदेशोऽयं चिन्निर्वाणैषणादिकम् ।
सूक्ष्मं पुर्यष्टकं देव्या मतिरेषा हि गौरवी ॥
अन्तर्दशारवसुधाज्ञानकर्मे(३)न्द्रियाणि च ।
महात्रिपुरसुन्दर्या इति संचिन्तयाम्यहम् ।
बाह्यो दशारभागोऽयं बुद्धिकर्माक्षगोचरः ॥
चतुर्दशारवसुधाकरणानि चतुर्दश ।
वसुच्छदनपद्माङ्कदेशो यश्चक्रगो विभुः ॥
अव्यक्ताद्याः प्रकृतयो भूतान्ता निश्चिनोम्यहम् ।
षोडशच्छदपद्माङ्कदेशो भूताक्षमानसम् ।
विकारात्मकमापन्नं देव्याः सम्भावयाम्यहम् ॥"

इति सुभगोदयवासनोक्तरीत्या बैन्दवादिचतुरस्रान्तेषु नवचक्रेषु आसनभूतेषु इन्द्रियादिरूपेण स्थितमित्यर्थः ॥ ५४ ॥

एवं रूपमिति । उक्तप्रकारेण विभक्तनिजेच्छादिषोडशविका-

---

(१) 'बिन्दोः सकाशात्' इति खपुस्तके नास्ति ।
(२) 'अष्टारांशप्रदेशोऽयं' खपुस्तके ।
(३) 'न्द्रियावलिः' खपुस्तके ।

तदीयशक्तिनिकरस्फुरदूर्मिसमावृतम् ॥ ५५ ॥
(१)चिदात्मभित्तौ विश्वस्य प्रकाशामर्शने यदा ।

रान्तावयवमयत्रिकोणादिचतुरस्रान्तश्रीचक्रवपुषा स्थितमित्यर्थः। इदं तस्मिन्मिथुने श्रीचक्रवपुषा परिणते सति तदीयावयवशक्तय एव आवरणदेवतारूपेण स्थिता इत्याह—तदीयेति । तयोः कामेश्वरकामेश्वर्योरेव (२)अयवयाः तेषां शक्तयः तासां निकराः समूहाः ते (३)स्फुरन्त एवोर्मयस्तरङ्गास्तैः समावृतम् । कोऽर्थः? प्रकाशविमर्शमयकामेश्वरकामेश्वरीस्वेच्छागृहीतविग्रहावयवेषु [(४)चक्रावयवतामुपगतेषु तद] वयवशक्तयोऽपि कामेश्वरी—वज्रेश्वरी—भगमालिन्याद्यावरण (५)देवतारूपेण परिवार्य तिष्ठन्तीत्यर्थः । ऊर्मिशब्देनेदं द्योत्यते प्रकाशात्मकः परमेश्वरः समुद्रः विमर्शरूपिणी कामेश्वरी सलिलं तदीयावयवाः शक्ति(६)-निकरा ऊर्मयः । यथा कल्लोलाः (७)समुद्रे जायन्ते तत्रैव लीयन्ते (८)एवं षट्त्रिंशत्तत्त्वमयं सशक्तिकं चक्रं तत्रैवोदेत्यस्तमेति चेति तात्पर्यम् । तत्राभियुक्तवचनम्—

"मूलोद्भवं शक्तिचक्रं यतस्तन्मयताङ्गतम् ।
तस्मिन्नेवाव्यये तत्त्वे विलीनं परिभावयेत् ॥
मूले स्वात्मनि चिद्रूपे यद्यद्यत्तत्तदेव हि ॥" इति ॥ ५५ ॥

सर्वचक्रवासनामुक्त्वा तेषु सवासनं मुद्राभेदमाह—चिदात्म-

(१) 'चिदात्मरूपे' इति के । (२) 'तदीयावयवाः' इति खे ।
(३) 'ते च' खे । (४) धनुश्चिह्नान्तर्गतो नास्ति खे ।
(५) खपुस्तके 'वरणं परिवार्य' एवमेव पाठः ।
(६) 'निकरा एव' कपाठः ।
(७) कपुस्तके 'समुद्रे एव' इति पाठः ।
(८) 'एवं तत्त्वमयं शक्तिचक्रम्' खपुस्तके ।

करोति स्वेच्छया पूर्णविचिकीर्षासमन्विता ॥ ५६ ॥
क्रियाशक्तिस्तु विश्वस्य मोदनाद्द्रावणात्तथा ।
मुद्राख्या, सा यदा संविदम्बिका त्रिकलामयी ॥५७॥

भित्तावित्यादिना एवं चक्रमयमित्यन्तेन । चिद् विमर्शशक्तिः(१)आत्मभित्तौ आत्मैव भित्तिः आत्मभित्तिः तस्यां स्वस्वरूपमेव भित्तिरित्यर्थः । विश्वस्य शिवादेर्भूम्यन्तस्य प्रकाशामर्शने अस्फुटस्य स्फुटीकारः प्रकाशः, इदन्तया हृदयङ्गमीभावो विमर्श एवामर्शनम् । एवंविधे प्रकाशामर्शने यदा सृष्टिकाले पूर्णविचिकीर्षासमन्विता विशेषेण कर्तुमिच्छा विचिकीर्षा विकारः क्षीरादीनामप्यस्ति (२)आतञ्चनादीनाम् । अत एवाह—पूर्णविचिकीर्षासमन्वितेति । (३)तत्र तु क्षीरादेः दध्यादिमात्रमेव विकारः, अत्र तु शिवादिक्षित्यन्तं तत्त्वाकारेण विकारः। अत एव पूर्णविचिकीर्षासमन्विता ॥ ५६ ॥

क्रियाशक्तिस्तु क्रियशक्तिरेव भूत्वा । तुरवधारणे । एवंविधस्य विश्वस्य मोदनाद् द्रावणाच्च । अत्र त्वनुकूलक्रियैव मोदनं, द्रावणं नाम तदेकरसीभावः । (४)संवित् मुद्राख्यां लभते । अयमर्थः—यदा विमर्शशक्तिः विश्वरूपेण विहर्तुमिच्छति तदा क्रियाशक्तिर्भूत्वा स्वविकारभूतस्य विश्वस्य परचिदानन्दलक्षणेन मोदनेन तदैकरस्यलक्षणेन द्रावणेन च मुद्राख्यामापन्नेत्यर्थः ।

तत्रादौ व्यापिकां त्रिखण्डामुद्रामाह—सा यदेति । सा वि-

(१) 'शक्तिः आत्मैव' कपाठः ।
(२) 'अस्मदादीनाम्' कपाठः ।
(३) खपुस्तके 'तत्र तु' नास्ति ।
(४) 'संवित्' नास्ति के ।

त्रिखण्डारूपमापन्ना सदा सन्निधिकारिणी ।
सर्वस्य चक्रराजस्य व्यापिका परिकीर्तिता ॥ ५८ ॥
योनिप्राचुर्यतः (१)सैषा सर्वसङ्क्षोभिका पुनः ।

---

मर्शरूपिणी संवित् त्रिकलामयी वामाज्येष्ठारौद्रीरूप(२)कलात्रय-(३)समष्टिरम्बिकाअम्बिकाग्रहणं (४)शान्ताया अप्युपलक्षणम् । इच्छाज्ञानक्रि(५)याशक्तिरूपकलामयसमष्टिभूता शान्तात्मिका भूत्वेत्यर्थः । त्रिखण्डारूपमापन्ना दक्षिणाङ्गुलयो वामाद्याः प्रकाशांशाः, वामाङ्गुलय इच्छाद्या विमर्शांशाः, तदुभययोगरूपबन्धनात्मकखण्डत्रयवती त्रिखण्डा मुद्रा जातेत्यर्थः । सदा सन्निधिकारिणी । अत(६)एवेयं संविद्देवतायास्त्रिपुरायाः सन्निधिकारिणी सान्निध्यकारिणी । सर्वस्य चक्रराजस्य, सर्वेषां चक्राणां (७)पूजायन्त्राणां श्रेष्ठत्वाच्चक्रराजस्य व्यापिका । नवचक्रस्थितनवमुद्राणां समष्टिभूतत्वात् ॥ ५७ ॥ ५८ ॥

सर्वसंक्षोभिणीमुद्रामाह—योनि इति । सैषा त्रिखण्डा खण्डत्रयमुन्मुच्य योनिप्राचुर्यतो मध्यमाद्वयसंयोगादे(८)का, अनामिकाद्वयसंयोगाद(९)न्या, कनिष्ठिकाद्वयसंयोगादपरा, एवं

---

(१) 'तच्चैषा' कपुस्तके ।
(२) 'कलामय' कपाठः
(३) 'समष्टिरूपा अम्बिका' इति कपुस्तके ।
(४) 'शान्त्यतीतायाः' खे ।
(५) 'क्रियारूपकलासमष्टिभूतत्वाच्छान्ता' खे ।
(६) 'एव संवि' खे ।
(७) 'पूजायन्त्राणाम्'के नास्ति ।
(८) 'देका योनिः, अनामाद्वय' खे ।
(९) 'दन्या योनिः, कनिष्ठाद्वय' इति खे ।

वामाशक्तिप्रधानेयं द्वारचक्रे स्थिता भवेत् ॥ ५९ ॥
क्षुब्धविश्वस्थितिकरी ज्येष्ठाप्राचुर्यमाश्रिता ।
स्थूलनादकलारूपा सर्वानुग्रहकारिणी॥ ६० ॥

---

यो(१)निप्राचुर्यात् (२)सा सर्व(३)संक्षोभिणी परानन्दप्रवणत्वकारिणी, वामाशक्तिप्रधानेयं (४)सर्वसङ्क्षोभिणी मुद्रा (५)वामाशक्तिप्रधानत्वात् सृष्टिः । सृष्टिरेव क्षोभः । द्वारचक्रे चतुरस्रत्रयरूपे चतुर्द्वारवति त्रैलोक्यमोहने चक्रे स्थिता ॥५९॥

द्राविणी(६)मुद्रामाह—क्षुब्धेति । क्षुब्धस्य विश्वस्य स्थितिकरी स्वसंविन्मात्रस्थिति (७)करी, अतो ज्येष्ठाप्राचुर्यमाश्रिता ज्येष्ठाशक्तेः स्थितिहेतुत्वात् । स्थूलनादकलारूपा स्थूलनादः श्रुतिगोचरत्वात् नादाज्जाताः कला नादकलाः षोडशस्वराः । अत्राभियुक्तवचनम् "क(८)लाः कलानादभवा वदन्त्यतः" इत्यादि, तद्रूपाः कामाकर्षि(९)ण्याद्यास्तद्रूपाः स-

---

(१) 'योनित्रयप्रा' इति कपुस्तके पाठः । परं स नोचितः । चतुःशत्युक्तमुद्रोद्धाराविरोधात् एकैकस्मिन् हस्तेऽङ्गुष्ठेन सह मध्यमाऽनामाकनिष्ठिकाग्रयोजनेन तासां षट्त्वाच्च ।

(२) 'सा उत्तरोत्तरकनिष्ठाङ्गुष्ठयोगरूपिणी' इति क पुस्तकेऽधिकः पाठः ।

(३) 'सर्वसंक्षोभिणी' इति के नास्ति, वस्तुतः 'सर्वसंक्षोभिका' इत्युचितम् ।

(४) 'वामाशक्तिप्रधानत्वात् सर्वे' इति कपाठः ।

(५) 'वामाशक्त्यधिष्ठितत्वात् । सृष्टिरेव' इति कपाठः ।

(६) 'मुद्रा' खे नास्ति । (७) 'कारिणी' खपाठः ।

(८) 'नादाः कला नादभवन्तीत्यादि' कपाठः ।

(९) 'ण्यादिनिवाससर्वाशा' कपाठः ।

सर्वाशापूरणाख्ये तु सैषा स्फुरितविग्रहा ।
ज्येष्ठावामासमत्वेन सृष्टेः प्राधान्यमाश्रिता ॥६१॥

र्वाशापूरकचक्रपू(१)रकत्वात् सर्वाशापरिपूरकाख्ये कामाक(२)र्षणी(३)कलाधारत्वात् । अत एव सर्वानुग्रहकारिणी कामाकर्षणमेव सर्वानुग्रहः । सैषेति तच्छब्देन चतुःशतीशास्त्रोक्ता सर्वविद्राविणी मुद्रा परामृश्यते । स्फुरितविग्रहा संविद्रूपत्वात् । कोऽर्थः ? ज्येष्ठाप्राचुर्याधारत्वात् स्थितिरूपिणी । अत एव ऋजुरूपमध्यमातर्जन्योः कनिष्ठिकानामिकयोश्च संयोगरूपिणी कामाकर्षिण्यादिरूपत्वात् सर्वानुग्रहकारिणी तदाधारत्वात् सर्वाशापरिपूरणाख्ये चक्रे संविद्रूपत्वात् स्फुरितविग्रहा चतुःशतीशास्त्रे प्रतिपादिता सैषा सर्वविद्राविणी मुद्रा स्थितेत्यर्थः ।

सर्वाकर्षिणीमुद्रामाह—ज्येष्ठेति । ज्येष्ठावामासमत्वेन ज्येष्ठावामाशक्तिद्वयसामरस्यरूपत्वात्सृष्टेः प्राधान्यमाश्रिता सृष्टिरूपा वामा, स्थितिरूपा (४)(ज्येष्ठा उभयसाम्यात्सृष्टिस्थितिसाधारणीयं वामांशेन वक्रतर्जनीमध्यमाद्वयरूपा) ज्येष्ठांशेन ऋजुयुक्तानामिकाकनिष्ठाद्वयरूपेत्यर्थः । अत एव वक्राङ्गुलिद्वयरूपत्वात् आकर्षिणीयं मुद्रा स(५)र्वसंक्षोभणचक्रे सर्वसंक्षोभिणी सर्वस्य संक्षोभिणी संस्मृता । स्मृतिः पूर्वानुभवसंस्कारजन्यं ज्ञानम् । पूर्वं चतुःशतीशास्त्रे अनुभूता मुद्रा इदानीं स्मृता सवासना कथितेत्यर्थः ।

(१) 'व्यापकत्वात्' खपाठः ।
(२) 'कर्षिणि' खे ।
(३) 'धारभूतत्वात्' खे ।
(४) धनुश्चिन्हान्तर्गतो ग्रन्थः कपुस्तके नास्ति ।
(५) सर्वसंक्षोभिणी सर्वसंक्षोभकारिणि चक्रे स्मृता' खपाठः ।

आकर्षिणी तु मुद्रेयं सर्वसंक्षोभिणी स्मृता ।
व्योमद्वयान्तरालस्थबिन्दुरूपा महेश्वरि ! ॥ ६२ ॥
शिवशक्त्यात्मसंश्लेषाद्दिव्यावेशकरी स्मृता ।
चतुर्दशारचक्रस्था संविदानन्दविग्रहा ॥ ६३ ॥

---

सर्ववशंकरीमुद्रामाह—व्योमद्वयेति । आधाराद्याज्ञान्तषट्चक्रान्तरालानि पञ्च व्योमानि तेषां द्वयोर्द्वयोर्मध्ये एकैको बिन्दुरिति पञ्च बिन्दवः पञ्चभूतमयाः । तदुक्तमभियुक्तैः—

पञ्चबिन्दुमयं भेदं पञ्चप्रणव (१)पञ्जरम् । इति ।

तद्रूपा व्योमद्वयान्तरालस्थबिन्दुरूपा, शिवशक्त्यात्मसंश्लेषात् शिवात्मानो दक्षकराङ्गुलयः, शक्त्यात्मानो वामकराङ्गुलयः, शिवशक्त्यात्मना परिवृत्त्येतरेतराङ्गुल्य(२)न्तरालप्रवेशितानां सर्वेषामन्योन्यगाढपरिपीडनादेवंभूता दिव्यावेशकरी मुद्रा दिव्यस्य प्रकाशात्मकशिवस्या(३)वेशः सामरस्यं तत्करी चतुर्दशारचक्रस्था चतुर्दशारचक्रे सर्वसौभाग्यदायकनामधेये स्थिता सं(४)विच्छक्तिरानन्दविग्रहा परमशिवसामरस्यरूपिणी । (५) ( कोऽर्थः ? उभयकराङ्गुल्यन्तरालगतैकैकाङ्गुलिरूपपञ्चबिन्दुमयशिवशक्तिद्वयसामरस्यनिरूपणलक्षणबन्धनात्मिकेयं मुद्रा ) संविदैकरस्यानन्दमयी च-

---

( १ ) 'पङ्कजम्' खे ।

( २ ) 'न्तरालद्वयगतैकैकाङ्गुलिरूपान्योन्यगाढपातनादेवंभूता' इति खपुस्तके ।

( ३ ) 'स्यावेशकरी सामरस्यकरी चतु' इति खपाठः ।

( ४ ) 'वित् स्थिरा' इति खे ।

( ५ ) धनुश्चिन्हान्तर्गतस्य स्थाने 'शिवशक्तिसामरस्यबिन्दुरूपलक्षणबन्धनात्मिकेयं मुद्रा सेयं' खपुस्तके पाठः ।

बिन्द्वन्तरालविलसत्सूक्ष्मरे(१)खाशिखामयी ।
ज्येष्ठाशक्तिप्रधाना तु सर्वोन्मादनकारिणी ॥६४॥
दशारचक्रमास्थाय संस्थिता वीरवन्दिते ।

तुर्दशारचक्रे स्थितेत्यर्थः ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥

उन्मादिनीमुद्रामाह–बिन्द्वन्तरालेति । (२)बिन्द्वन्तरालविलसत् आधारादिब्रह्मरन्ध्रान्तर्गतयो(३)र्निमध्यगतयोः महाबिन्द्वोः स्वयम्भूपरा(४)ख्ययोर्लिङ्गयोरन्तरालात् विलसत्सू(५)क्ष्मरेखाशिखामयी वि(६)लसन्ती सूक्ष्मरूपबिसतन्तुनिभा(७)कृतिः रेखेव रेखावत् शिखा अम्बिकाशान्तयोः तन्मयी तदेकरसस्वरूपा ज्येष्ठाशक्तिप्रधाना ज्येष्ठाशक्तिप्रचुरा सर्वोन्मादनकारिणी उन्मादश्चित्तविभ्रमः । सर्वान् उन्मत्त(८)वत्सर्वव्यापारपराङ्मुखान् शिवशक्तिसामरस्यानुसन्धानपरान् करोतीत्यर्थः ॥ ६४ ॥

दशारचक्रमास्थाय दशारचक्रं बहिर्दशारचक्रं वीरवन्दिते इदन्तारिपोरहमि समराङ्गणे प्रलयप्रतिपादनपरा वीराः तैर्वन्दिते आत्माहम्भावनया भाविते । तदुक्तं परापञ्चाशिकायाम्–

अहमि प्रलयङ्कुर्वन्निदमः प्रतियोगिनः ।
पराक्रमपरो भुङ्क्ते स्वभावमशिवापहम् ॥ इति ।

(१) 'सूक्ष्मरूपशि' खपुस्तके ।
(२) 'बिन्द्वन्तरालात्' खपुस्तके ।
(३) 'योनिमहाबिन्द्वोः' इत्येव खपुस्तके ।
(४) 'पराख्ययोरन्त' इत्येव कपुस्तके ।
(५) 'सूक्ष्मरूपशिखा' इति खपुस्तके ।
(६) 'विलसन्त्यौ सूक्ष्मरूपे' खपाठः ।
(७) 'निभाकृती शिखेव शिखावत् 'शिखा' खपाठः ।
(८) 'वत्स्वस्वव्या' खे ।

वामाशक्तिप्रधाना तु महाङ्कुशमयी पुनः ॥६५॥
त(१)द्वद्विश्वं वमन्ती सा द्वितीये तु दशारके ।
संस्थिता मोदनपरा मुद्रारूपत्वमास्थिता ॥ ६६ ॥

---

कोऽर्थः ? अतः कुलाकुलबिन्दुद्वयान्तरालविलसदम्बिकाशान्ताख्या वह्न्यमृतकुण्डलिनीरूप( (२)शिखाद्वयसदृश )शक्तिशिवाख्यकरद्वयमध्यमाङ्गुष्ठद्वयसंयोगबिन्दुद्वयाकारवर्तुलद्वयान्तर्गतकनिष्ठिकाद्वयमयी ज्येष्ठाशक्तिप्रधानत्वात् । ऋज्वाकृत्यनामातर्जनीद्वयाग्रसंयोगरूपा शिवशक्तिसामरस्यानुसन्धानलक्षणबन्धनरूपा सर्वोन्मादिन्याख्या मुद्रा बहिर्दशारचक्रमास्थाय संस्थितेत्यर्थः ।

महाङ्कुशमुद्रामाह—वामेति । बिन्द्वन्तरालविलसत्सूक्ष्मरेखाशिखामयी ऋज्वाकृतितर्जन्यनामिकासंयोगरूपा ज्ये(३)ष्ठाशक्तिप्रधाना पूर्वं भवति । इदानीं वामाशक्तिप्रधाना ।

वामा विश्वस्य वमनादङ्कुशाकारताङ्गता

इति पूर्वोक्तरीत्या वामाशक्तिप्रधानत्वात् वक्राकारतर्जनीलक्षणबन्धनरूपा (४) विश्वं वमन्ती सा सृष्टिरूपत्वात् तद्वत् परमशिववत् द्वितीये तु अन्तर्दशारके मोदन(५)परा परशिवसामरस्यलक्षणपरानुसन्धानमयी, अत एव मुद्रारूपत्वमा-

---

(१) 'अधोविश्वं' क० ।
(२) धनुश्चिन्हान्तर्गतं खपुस्तके नास्ति ।
(३) 'वामाशक्तिप्रधाना न भवति । ऋज्वाकृतितर्जन्यनामिकासंयोगरूपा न भवति' इति कपुस्तके पाठः ।
(४) कपुस्तके 'अधो' इत्यधिकम् ।
(५) 'मोदनपरा शिव'इत्येव खे ।

धर्माधर्मस्य सङ्घट्टादुत्थिता वित्तिरूपिणी ।
विकल्पोत्थक्रियालोप(१)रूपदोषविघातिनी ॥६७॥
विकल्परूपरोगाणां हारिणी खेचरी परा ।

---

स्थिता । अयमर्थः–पूर्वोक्तमुद्रालक्षणविमर्श(२)मयचिच्छक्तिरेव(३)वामाशक्तिभूततर्जनीद्वयमथपरशिवसामरस्यपरानन्दप्रवणरूपा महाङ्कुशमुद्राख्यान्तर्दशारे स्थिता ॥ ६५ ॥ ६६ ॥

खेचरीमुद्रामाह–धर्माधर्मेति । धर्माधर्मस्य सङ्घट्टात् धर्मः शक्तिः सृष्ट्यादिसकलधर्मपरत्वात्, अधर्मः शिवः तत्तत्सकलधर्मराहित्यात्, (४)तयो सङ्घट्टः सामरस्यं तस्मादुत्थिता, वित्तिरूपिणी वित्तिः संवित्तिः, विकल्पोत्थक्रियालोपरोगदोषविघातिनी विकल्पः कोटिद्वयालम्बनम् एवं वा एवं वेतिसंशय(५)ज्ञानम् विकल्पोत्थाः क्रियाः नित्यनैमित्तिककाम्यरूपास्तल्लोपे(६)न प्रत्यवायः प्रायो जायते तस्य विघातिनी, विकल्परूपरोगाणां हारिणी परिपूर्णभावस्य शिवस्य ममैवमेतत्कर्तव्यमन्वेति विकल्परूपरोगाः आधय एव व्याधयः । तदुक्तमभियुक्तैः–

"अपूर्णमन्यता व्याधिः कार्पण्यैकनिदानभूः ।
क्लेशावहो (७)जुगुप्सा"इति ।

---

(१) 'रोगदोष' कपुस्तके । (२) 'विमर्शलक्षणाचि' क ।
(३) 'वामाप्राधान्याद्यक्तीभूतेत्यर्थः । ते द्वय पर' खपाठः ।
(४) 'तत्सङ्घट्टः' खपुस्तके ।
(५) 'ज्ञानं विकल्पः विकल्पोत्थक्रियाः' खे ।
(६) 'येन पापं जायते' खे ।
(७) 'वहोऽतिकष्टश्च' खे ।

सर्वरोगहराख्ये तु चक्रे संविन्मयी स्थिता ॥६८॥

शिवशक्तिसमाश्ले(१)षस्फुरद्व्योमान्तरे पुनः ।

---

तेषां हारिणी, खेचरी खे

निरस्तसकलक्रियाक्रमे या चितिश्चरति शाश्वतोदया

सा शिवत्वसमवाप्तिकारिणी खेचरी सकलखेदहारिणी ।

इति (२)मदुक्तरीत्या निर्विकल्पबोधभूमिसञ्चारिणी चितिः चिच्छक्तिः तस्याः परमशिवसामरस्यरूपतदधिष्ठितत्वात्सर्वरोगहराख्ये चक्रे संविन्मयी स्थिता । कोऽर्थः ? शिवशक्तिमयदक्षवामबाहुद्वयपरिवर्तनरूपतर्जनीद्वयावलम्बितव्यत्यस्तकरद्वयकनिष्ठानामिकाद्वन्द्वतदुपरिस्थितमध्यमाद्वयाग्रसंयुक्ताङ्गुष्ठद्वयाग्रसंयोजनलक्षणबन्धनरूपा शिवशक्तिद्वयसङ्घट्टादुत्थि(३)तत्वात्परा निर्विकल्पबोधभूमिसञ्चारिणी अत एव विकल्पजनितनित्यनैमित्तिककाम्यकर्ममलोरूप(४)दोषविघातिनी अत एव (५)च विकल्परूपरोगाणाम् अपूर्णमन्यतालक्षणानां हारिणी सर्वरोगहराख्ये चक्रे खेचरीमुद्रा स्थितेत्यर्थः ॥ ६७ ॥ ६८ ॥

बीजमुद्रामाह—शिवशक्तीति । शिवशक्त्योः समाश्लेषः सामरस्यं तन्मध्ये स्फुरद्व्योमान्तरे प्रकाशविमर्श(६)रूपसूक्ष्मतरगगनान्तराले सूक्ष्मरूपस्थितं कारणतावन्मात्रतया स्थितं

---

(१) 'समाश्लेषः' कपुस्तके ।

(२) 'तदुक्त' ख० ।

(३) 'दुत्थिता सदानिर्वि' इति खपाठः ।

(४) कपुस्तके 'रूप' नास्ति ।

(५) कपुस्तके 'च' नास्ति ।

(६) 'रूप' शब्दो नास्ति खपुस्तके ।

प्रकाशय(१)ति विश्वं सा सूक्ष्मरूपास्थितं सदा॥६९॥
बीजरूपा महामुद्रा सर्वसिद्धिमये स्थिता।
सम्पूर्णस्य प्रकाशस्य लाभभूमिरियं पुनः ॥७०॥
योनिमुद्रा कलारूपा सर्वानन्दमये स्थिता।

---

विश्वं सदा सर्वदा (२)प्रकाशयति अत एव बीजरूपा महामुद्रा, तस्याः (३)भाविचराचररूपविश्वोत्पत्तिहेतुत्वात्सर्वसिद्धिमये विश्वोत्पत्तिहेतुभूतबीजमुद्राधारत्वात् सर्वस्य शिवादेर्भूम्यन्तस्य सिद्धिः उत्पत्तिः। तदुक्तमीश्वरप्रत्यभिज्ञायाम्—"चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" इति। तन्मये चक्रे स्थिता। कोऽर्थः? शिवशक्तिसंज्ञितोभयकरव्यत्यस्तकानिष्ठिकाद्वयाग्रावलम्बनवक्रोभयानामिकोभयपार्श्वप्रसृतसंयुक्ताग्रमध्यमाद्वयोपरिस्थितवक्राकारतर्जन्यङ्गुष्ठयुगलाग्रसमाश्लेषान्तरालप्रतीयमानगगनान्तराले कारणतावन्मात्रतया स्थितं विश्वं प्रकाशयन्ती बीजमुद्रा सर्वसिद्धिमयाभिधे चक्रे स्थितेत्यर्थः।

योनिमुद्रामाह—सम्पूर्णस्येति। सम्पूर्णस्य (४)प्रकाशस्य प्रकाशात्मनः परमशिवस्य लाभभूमिः प्राप्तिस्थानम्। अत एवेयं योनिमुद्रा योनिरूपा मुद्रा योनिमुद्रा योनिस्त्रिकोणं वामादीच्छादिशक्तित्रितयसामरस्य(५)रूपान्तस्त्रिकोणान्तरालरूपिणी कला-

---

(१) 'प्रकाशयन्ती' कपुस्तके।
(२) 'प्रकाशात्मनि' खपुस्तके।
(३) खे 'भावि' नास्ति।
(४) 'प्रकाशस्य अनुत्तरस्य' कपुस्तके।
(५) 'रूपा त्रिकोणरूपिणी' खपुस्तके।

क्रियाचैतन्यरूपत्वादेवं चक्रमयं स्थितम् ॥ ७१ ॥

---

रूपा हार्द(१)कलात्मिका विमर्शशक्तिरूपा । अत एव सर्वानन्दमये शिवशक्तिसामरस्यसमुदितपरानन्दलक्षण(२)परमाबिन्दुरूपसर्वानन्दमयनाम्नि चक्रे स्थिता। कोऽर्थः? वामेच्छारूपवक्रतर्जनीद्वयाग्रगृहीतव्यस्तानामिकाद्वयाग्रपरिगतज्येष्ठाज्ञानमयऋजुसंयुक्तामध्यमाद्वयमध्यगतरौद्रीक्रियात्मकनिष्ठिकाद्वयाग्रयोजितसम्पूर्णप्रकाश(३)रूपाङ्गुष्ठद्वयाग्ररूपा(४)विमर्शकलारूपमयी योनिमुद्रा प्रकाशविमर्शसामरस्यलक्षण(५)परबिन्दुमयसर्वानन्दमये चक्रे स्थितेत्यर्थः । उक्तमुपसंहरति–क्रियेति । क्रिया—

क्रियाशक्तिस्तु विश्वस्य मोदनाद् द्रावणात्तथा ।

इत्युपक्रान्ता क्रियाशक्तिरेव भेदेन विरचनामयी वामादिशक्तिप्राधान्यभेदात्सङ्क्षोभणादियोन्यन्तमुद्रारूपेण चैतन्यस्वरूपत्वाच्चक्रमयं त्रैलोक्यमोहनादिसर्वानन्दमयान्तनवचक्रमयं स्थितमित्यर्थः ॥ ६९ ॥ ७० ॥ ७१ ॥

ननु—

यदा सा परमा शक्तिः स्वेच्छया विश्वरूपिणी ।

इत्युपक्रान्तं कथम्पुनः

क्रियाचैतन्यरूपत्वादेवं चक्रमयं स्थितम् ।

इत्युपसंह्रियते इत्याशङ्क्य तर्हि महान् प्रक्रतोपसंहारस्त्वप-

---

(१) 'कलात्मकविमर्शरूपा' खे ।
(२) खपुस्तके 'परम' नास्ति ।
(३) 'प्रकाशविमर्शरूपा' इति के ।
(४) 'विमर्शशक्तिकलारूपा या योनि' इति क०
(५) 'पर' नास्ति खे ।

इच्छारूपं परन्तेजः सर्वदा (१)भावयेद्बुधः ।
त्रिधा च नवधा चैव चक्रसङ्केतकः पुनः ॥ ७२ ॥
वह्निनैकेन शक्तिभ्यां द्वाभ्यामेकोऽपरः पुनः ।
तैश्च वह्नित्रयेणापि शक्तीनान्त्रितयेन च ॥७३॥

---

मित्याह—इच्छारूपमिति । परं तेजः शिवशक्तिसामरस्यरूपपरामर्शं ज्योतिः इच्छारूपं (२)स्वेच्छागृहीतनानानामरूपमपञ्चमयं सर्वदा कालत्रयेऽपि भावयेत् बुधः साक्षात्परशिव(३)सदृक्षरूपनिजगुरुकटाक्षपातेन ।

घृणा शङ्का भयं लज्जा जुगुप्सा चेति पञ्चमी ।
कुलं शीलञ्च जातिश्चेत्यष्टौ पाशाः प्रकीर्तिताः ॥

इत्यभियुक्तवचनोक्तरीत्या पाटितपाशाष्टकतया परिस्फुरत्परमशिवाहम्भावः स्वेच्छाकल्पित(४)नानानामरूपप्रपञ्चमयं श्रीचक्ररूपेण परिणतं परामर्शं तेजः सर्वदा भावयेदित्यर्थः। पुनरस्यैव चक्रस्य प्रकारान्तरेण वासनान्तरमाह—त्रिधा चेत्यादिना । स्पष्टम् ॥ ७२ ॥

तत्रादौ त्रिधात्ववासनामाह—वह्निनैकेनेति । एकेन वन्हिना द्वाभ्यां शक्तिभ्यामेकः प्रकारः । तैश्चैकवन्हिशक्तिद्वयरूपैस्त्रि(५)कोणत्रयैः पुनर्वान्हित्रयेण शक्तीनां त्रितयेन चापरः प्रकारः । अयमर्थः—त्रिकोणानामेवोपरि विस्तारक्रमेण

---

(१) 'भासये' क ।
(२) 'स्वेच्छाकृतनानारूप' ख०
(३) 'शिवरूप' ख ।     (४) 'नानारूप' ख ।
(५) 'त्रिकोणैः' ख ।

पद्मद्वयेन चान्यत्स्याद् भूगृहत्रितयेन च ।
पञ्चशक्तिचतुर्वह्निपद्मद्वयमहीत्रयम् ॥ ७४ ॥
(१)परिपूर्णं महाचक्रं, तत्प्रकारः प्रदर्श्यते ।
तत्राद्यं नवयोनि स्यात्, तेन द्विदशसंयुतम्॥७५॥
मनुयोनि परं विद्यात्, तृतीयं तदनन्तरम् ।
अष्टद्व्यष्टदलोपेतं चतुरस्रत्रयान्वितम् ॥ ७६ ॥

---

पुनर्वह्नित्रयेण (२)शक्तित्रयेण च जायतेऽयमेकः प्रकारः॥७३॥ पद्मद्वितयेन भूगृहात्रितयेन चान्यः प्रकारः । पद्मद्वय(३)वृत्तत्रयान्तरालेयोरष्टदलं षोडशदलं चेति । भूगृहात्रितयं चतुरस्रत्रयम् । एवं कृते सति पञ्च शक्तयश्चत्वारोवन्हयः पद्मद्वयं महीत्रयश्चेति परिपूर्णं महाचक्रं समष्टिरूपम् ।

तत्प्रकारत्रयमेव विविच्य विवृणोति—तत्प्रकार इति । जातावेकवचनम् । तत्प्रकाराः प्रदर्श्यन्त इत्यर्थः । तत्र तेषु प्रकारेषु, आद्यं नवयोनि वन्हिनैकेन शक्तिभ्यां द्वाभ्यामित्यस्य विवरणम् । एकस्य वन्हेर्द्वयोः शक्त्योश्च संयोगे सति बैन्दवत्रिकोणाष्टकोणैर्नवयोनि चक्रं भवतीत्यर्थः । तेन द्विदशसंयुतं मनुयोनिपरं विद्यात् । तेन नवयोनिचक्रेण द्विदशसंयुतं दशारद्वयसंयुतं मनुयोनि चतुर्दशकोणं परं द्वितीयं जानीयात् । तेन वन्हित्रये शक्तित्रये च कृते सति दशारचक्रद्वयं चतुर्दशारचक्रं च चक्रत्रितयं द्वितीयं चक्रं भवतीत्यर्थः । तदनन्तरमष्टद्व्यष्टदलोपेतं चतुरस्रत्रयान्वितम् । तेन चक्रद्वयेनान·

---

(१) 'इति पूर्णम्' ख ग ।
(२) 'शक्तित्रये जातेऽपरः प्रकारो भवतीति' खपुस्तके पाठः ।
(३) 'रेखात्रया' ख ।

चक्रस्य त्रिप्रकारत्वं कथितं परमेश्वरि ।

सृष्टिः (१)स्यान्नवयोन्यादिपृथ्व्यन्तं, संहृतिः पुनः ॥७७॥

न्तरमव्यवधानेन स्थितमत्यन्तसन्निहितम् अष्टदलकमलेन षोडशदलकमलेन चोपेतं चतुरस्रत्रयात्मकं तृतीयं चक्रमित्यर्थः ।

ननु त्रयाणां चक्राणामेकैकप्रकारत्वं कथमिति ? उच्यते,

प्रत्येकमंशभेदेन सर्गस्थितिलयक्रमात् ।

इति सङ्केतपद्धत्युक्तरीत्या एकैकचक्रावयवत्रितयस्य सृष्टिस्थितिसंहारभेदात् क्रोडीकारः । तद्यथा—चतुरस्रत्रयं सृष्टिसृष्टिः, षोडशदलपद्मं सृष्टिस्थितिः, अष्टदलपद्मं सृष्टिसंहारः । एवं चक्रत्रयमयं सृष्टिमयत्वादेकम् । एवञ्चतुर्दशारं स्थितिसृष्टिः, बाह्यदशारं स्थितिस्थितिः, अन्तर्दशारं स्थितिसंहारः । एवं चक्रत्रयं (२)स्थितिमयत्वादेकम् । एवमष्टकोणं संहारसृष्टिः, त्रिकोणं संहारस्थितिः, बैन्दवं संहारसंहारः, एवं चक्रत्रयं संहारमयत्वादेकम् । बैन्दवं चक्रमारभ्य चतुरस्रान्तोद्धारः सृष्टिरित्यर्थः ॥७६॥

इत्येतत्सर्वम्मनसि निधायाह—चक्रस्य त्रिप्रकारत्वं कथितं परमेश्वरीति । स्पष्टम् ।

ननु चक्रस्य त्रैविध्यमुक्तं यदि तर्हीदं चक्रं मध्यचक्रमारभ्य किमुत्पादयितुं न शक्यते इत्यत आह—सृष्टिरिति । (३)अत्र नवयोनिशब्देन नवयोन्यन्तर्गतं बैन्दवं चक्रं लक्ष्य-

(१) 'सृष्टिस्थं' ख । (२) 'संहारमयत्वा' क० ख० ।

(३)'अत्र'इत्यारभ्य 'तात्पर्यम्'। यथा देवदत्त'इत्येतदन्तग्रन्थस्य स्थाने खपुस्तके—"संहृतिः पुनः पृथ्व्यादिनवयोन्यन्तामिति । अत्र नवयोनिशब्देन योन्यन्तर्गतं बैन्दवं चक्रं लक्ष्यते । तथाच चतुरस्रत्रयमारभ्य बैन्दवान्तमुद्धारः संहार इत्यर्थः इति चतुःशतीशास्त्रस्य निर्णयः । अतो न मध्यमादिचक्रमुद्धारयतीति तात्पर्यम् । देवदत्त" इति पाठः ।

पृथ्व्यादिनवयोन्यन्तामिति शास्त्रस्य निर्णयः ।
एतत्समष्टिरूपन्तु त्रिपुराचक्रमुच्यते ॥ ७८ ॥
(१)यस्य विज्ञानमात्रेण त्रिपुराज्ञानवान् भवेत् ।

ते । तद्वैन्दवं चक्रमारभ्य चतुरस्रान्तोद्धारः सृष्टिः, संहृतिः पुनः पृथ्व्यादिनवयोन्यन्तमिति । तथा च चतुरस्रत्रयमारभ्य बैन्दवान्तमुद्धारः संहार इत्यर्थः इति चतुःशतीशास्त्रस्य निर्णयः । अतो न मध्यमारभ्य चतुःशतीशास्त्रस्य चक्रोद्धार इति तात्पर्यम् ।

यथा देवदत्तविष्णुमित्रयज्ञदत्तेषु प्रस्तुतेषु देवदत्तयज्ञदत्तयोः फलानि देयानि इत्युक्ते विष्णुमित्रस्य न देयानीति गम्यते । तद्वत्पूर्वं श्रीचक्रमवयवशो विभज्य वासनामुक्त्वा इदानीं समष्टिचक्रस्य वासनामाह–एतदिति । एतत्समष्टिरूपं सृष्ट्यादित्रितयं समष्टिर्नाम । अवयवी तु तथा (२)न भवति, सृष्टिपदेन स्थितिपदेन संहारप (३)देनापि च नाभिधीयते, किन्तु त्रिपुराचक्रमुच्यते त्रिपुरायाः सृष्ट्यादिभ्यस्त्रिभ्यः पुरा विद्यमानत्वात्त (४)त्पदाभिधेयाया अनाद्यन्तरूपायाः स्वसंविदश्चक्रमाविर्भावभूमिरित्युच्यते । तदुक्तं सङ्केतपद्धत्याम्–"वशिन्योऽष्टौ सान्तरालम्" इत्यादिना "अनाख्या सर्वगा ततः" इत्यन्तेन ॥ ७८ ॥

ननु स्वसंविद्रूपा त्रिपुरैव सा ज्ञायताङ्किमेतेन चक्रवासनालक्षणेन बकबन्धनविधिप्रयासेनेत्यत आह–यस्येति । (५)यस्य

(१) 'अस्य' कपुस्तके (२)कपुस्तके 'तथा' नास्ति ।
(३)'पदेनाभि'इत्येव के । (४)'तत्पदानाभि' ख० ।
(५)'अस्य'क० ।

चक्रस्य नवधात्वञ्च कथयामि तव प्रिये ॥७९॥
आदिमं भूत्रयेण स्याद्द्वितीयं षोडशा(१)रकम् ।
अन्यदष्टदलं प्रोक्तं मनुकोणमनन्तरम् ॥ ८० ॥
पञ्चमं दश(२)कोणं स्यात् षष्ठञ्चापि दशारकम् ।
सप्तमं वसुकोणं स्यान्मध्यत्र्यस्रमथाष्टमम् ॥८१॥
नवमं त्र्यस्रमध्यं स्यात् तेषां नामान्यतः शृणु ।

---

विज्ञानमात्रेण य(३)स्मिन्विज्ञात(४) एव त्रिपुराचक्रज्ञानमात्रेण त्रिपुराज्ञानवान् ज्ञाता भवेत् । कोऽर्थः ? (५)शुद्धाया निराकारमूर्तेस्त्रिपुराया ज्ञानमशक्यम् । अत एवोक्तरीत्यैव एतच्चक्रवासनया तन्मध्ये (६)बैन्दवचक्रे क्रोडीकृता सा ज्ञातुं शक्येत्यर्थः । तदुक्तमभियुक्तैः—

"घृतकाठिन्यवच्चक्रं महायोनौ चिदम्बरम् ।
द्रुतहेमघनीभावमिति मूर्तिङ्करोम्यहम्" ॥ इति ।

चक्रस्य पूर्वमुद्दिष्टं नवधात्वमिदानीं वक्तुं प्रतिजानीते—चक्रस्येति । यतः प्रियतमाऽसि त्वमतो रहस्यमपि कथयामीत्यर्थः ॥ ७९ ॥

इदानीं नवधा(७)त्वमेवाह—आदिमामिति । भूत्रयेण चतुरस्रत्रयेण, मनुकोणं च(८)तुर्दशारं, वसुकोणम् अष्टकोणम् । स्पष्टमन्यत् ।

---

(१) 'कोणञ्च' के। (२) 'षोडशच्छदम्' गे ।
(३)'आस्मिन्' कपुस्तके । (४)'विज्ञामात्र एव' कपुस्तके ।
(५)'शुद्धानिरा' खे । (६)'बैन्दवे क्रोडी' खे ।
(७) 'नवधात्वमाह' खे ।
(८) 'चतुर्दशकोणं स्पष्ट' इत्येव खपुस्तके पाठः ।

त्रैलोक्यमोहनं चक्रं सर्वाशापरिपूरकम् ॥ ८२ ॥
सर्व(१)संक्षोभणं गौरि! सर्वसौभाग्यदायकम् ।
सर्वार्थसाधकं चक्रं सर्वरक्षाकरं (२)परम् ॥८३॥

---

उक्तानान्नवचक्राणां नामान्याह—तेषां नामानीति । त्रैलोक्यमोहनं लोक्यत इति लोकः, लोक्य(३)तेऽनेनेति लोकः, लोकयतीति लोक इति कर्मकरणकर्तृव्युत्पत्त्या मेयमानमातृलक्षणं त्रैलोक्यं, तस्य मोहनं तिरोधायकमद्वैतप्रतीत्युत्पादनेन । सर्वाशापरिपूरकम् आशा नाम अतृप्तस्य पदार्थान्तरेषु स्पृहा तस्याः सर्वस्याः स्पृहायाः परिपूरकं नित्यपरिपूर्णतृप्तिलक्षणपरमशिवसामरस्यप्रतिपादनेन ॥ ८२ ॥

सर्व(४)संक्षोभणं सर्वस्य क्षित्यादेः शिवान्तस्योपर्युपरि तत्त्व(५)क्रमेण संक्षोभस्तस्य संहारलक्षणस्य कारकं भे(६)दप्रपञ्चलयरूपरूपत्वात् । सर्वसौभाग्यदायकं सर्वसौभाग्यं सर्वस्पृहणीयता तस्या दायकं, सर्वस्पृहणीयपरप्रेमास्पद(७)परमशिवैक्यप्रतिपादनेन । सर्वार्थसाधकं सर्वेषां वैदिकानां तान्त्रिकाणां क्रि(८)याणामर्थः प्रयोजनं परमशिवप्राप्तिः । तदुक्तं महाकविभिः—

बहुधा ह्यागमैर्भिन्नाः पन्थानः सन्ति भूतले ।
त्वय्येव निपतन्त्योघा जान्हवीया इवार्णवे ॥ इति ।

तत्साधयति [सर्वरक्षेति] । सर्वरक्षाकरं रक्षा नाम प्रतिकूलपदार्थादुपरतिः परिहारः षट्त्रिंशत्तत्त्वात्मकं सर्वमेव प्रतिकूलपदार्थः

---

(१) 'सर्वक्षोभकरं' खपुस्तके । (२) 'तथा' ग० ।
(३) 'लोकनं लोकः' क० । (४) 'संक्षोभकरं' ख० ।
(५) 'क्रमेण क्षोभस्य सं' ख० । (६) 'बैन्दवप्र' क० ।
(७) 'पर' ख० । (८) 'क्रियाणामप्यर्थः' ख० ।

सर्वरोगहरं देवि ! सर्वसिद्धिमयं तथा ।
सर्वानन्दमयञ्चापि नवमं शृणु सुन्दरि ! ॥८४॥
अत्र पूज्या महादेवी महात्रिपुरसुन्दरी ।

---

तस्मात्सर्वस्मात् रक्षां शिवाहम्भावभावनालक्षणां करोति । तदुक्तं परापञ्चाशिकायाम्—

अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः ।
पराक्रमपरो भुङ्क्ते स्वभावमशिवापहम् ॥ इति ॥ ८३ ॥

सर्वरोगहरं भे(१)दलक्षणं षट्त्रिंशत्तत्त्वात्मकं सर्वमेव रोगः तस्य हरम् अभेदप्रतीतिहेतुत्वात् । अत्रैवोक्तं—

विकल्परूपरोगाणां हारिणी खेचरी परा । (यो० हृ०सं० १ श्लो० ४१ ) इति ।

सर्वसिद्धिमयं सर्वस्य सिद्धिरुत्पत्तिः स्थितिः संहारश्च तन्मयं, त्रिकोणस्य सृष्टिस्थितिसंहारहेतुत्वात् । तदुक्तमीश्वरप्रत्यभिज्ञायाम्—"चितिः स्वतन्त्रा विश्वसिद्धिहेतुः"इति ।

सर्वानन्दमयं शिवशक्तिलक्षणप्रकाशविमर्शसामरस्यरूपत्वात् । अत्र सर्व(२)त्र प्रवृत्तिनि(३)मित्तभेदाभावादद्वैतविश्रान्तिरेव परमार्थः ॥ ८४ ॥

पूर्वोक्तवासनाचक्रस्य प्रयोजनमाह—अत्रेति । महादेवी (४)महती देशकालैरनाकलितत्वात् देवी द्यो(५)तनार्था दे-

---

( १ ) 'भेदलक्षणं' नास्ति ख० ।
( २ ) 'अत्र सर्वप्रवृत्ति' क० ।
( ३ ) 'निमित्तभेदादद्वैत' ख० ।
( ४ ) 'महती देवी देशकालाकारैरना' क० ।
( ५ ) 'द्योतनादिति देवी' 'ख' ।

परिपूर्णं महाचक्रमजरामरकारकम् ॥ ८५ ॥

वीपदाभिधेया विमर्शरूपा । अत्र त्रिधा नवधा च पूर्वोक्तवासनाचक्रे महात्रिपुरसुन्दरी महती अनावरणा चिद्रूपिणी त्रिपुरा तुर्यरूपत्वात् सुन्दरी (१)स्वात्मतया (२)सर्वस्य स्पृहणीयत्वात् । एवंविधा स्वसंविद्देवता पूज्या वक्ष्यमाणपरादित्रिविधरूपया पूजया भावनीया ।

त्रैलोक्यमोहनादिनवचक्राणां स्वस्वनामानु(३)रूपार्थवासनालक्षणफलान्युक्त्वा समष्टिचक्रस्य फलमाह—परिपूर्णमिति । परिपूर्णं (४)नवचक्रसमष्टिरूपं महायोनि (५)मध्यमहाबिन्दुच(६)क्रस्फुरत्प्रकाशाविमर्शसामरस्यरूपपराप्रभापटलमयसर्वानन्दमयं(७)सर्वावरणसमग्रं च, महाचक्रं विश्वमयं विश्वोत्तीर्णपरामयत्वात्, अजरामरकारकम् अजरः कालत्रयातीतत्वा(८)त् अत एवामरः उत्पत्तिविनाशरहितत्वात् , अजरामरः (९)परमशिवः (१०)कारकं स्वपूजकस्य (११)कालत्रयातीतोत्पत्तिविनाशरहितनित्यपरमशिवत्वप्राप्तिलक्षणं मोक्षं करोतीत्यर्थः ॥८५॥

---

(१) 'स्वस्वात्मतया' ख० ।
(२) 'सर्वस्पृ' ख० ।
(३) 'रूपलक्षणफला' ख० ।
(४) 'नवचक्रसमष्टिरूपं' नास्ति खे ।
(५) 'मध्य' नास्ति खे ।
(६) 'चक्र' नास्ति खे ।
(७) 'सर्वावरणसमग्रं च' नास्ति खे ।
(८) 'त्वात्, अमरः अत एवोत्पत्ति' ख० ।
(९) 'परम' नास्ति खे ।
(१०) 'कारकं' नास्ति ख० ।
(११) 'कालातीतनित्यपरशिव' ख ।

एवमेव महाचक्रसङ्केतः परमेश्वरि ।
कथितस्त्रिपुरादेव्या जीवन्मुक्ति(१)प्रवर्तकः ॥८६॥

---

चक्रसङ्केतमुपसंहरति—एवमिति । एवम् उक्तप्रकारेण त्रिपुरादेव्याः पूर्वोक्तलक्षणाया महाचक्रसङ्केतः षट्त्रिंशत्तत्त्वचक्ररूपत्वात् महाचक्रं जीवतो मुक्तिः जीवन्मुक्तिः मुक्तिर्हि बन्धनादुद्बन्धनं घृणादिपाशाष्टकेन । कोऽर्थः ? (२)परमशिवादिस्वगुरुपरदेवताधिगतपरमार्थश्चक्रसङ्केतकः स्वपरामर्शकस्य हठादेव सकलपाशविनाशनेन शिवाहम्भावभावनां प्रवर्तयतीत्यर्थः ॥ ८६ ॥

इति श्रीमत्परमयोगीन्द्रपरमहंसपुण्यानन्द(३)नाथ-
शिष्यपरमहंसामृतानन्दना(४)थयोगिप्रव-
रविरचितायां वा(५)मकेश्वरतन्त्रयो-
गिनीहृदयदीपिकायां चक्रसङ्केतकः
प्रथमः (६)पटलः ॥ १ ॥



---

(१) 'प्रदायकः' क० ।
(२) 'परशिवादिगुरुपरम' ख० ।
(३) 'नाथ' खे नास्ति ।
(४) 'नाथ' नास्ति खे ।
(५) 'वामकेश्वरतन्त्र' खे नास्ति ।
(६) 'पटलः' नास्ति खे ।

मन्त्रसङ्केतकं दिव्यमधुना कथयामि ते ।
यद्वेत्ता त्रिपुराकारो वीरचक्रेश्वरो भवेत् ॥ १ ॥

---

अथ द्वितीयं मन्त्रसङ्केतकं श्रोतृजनप्रवृत्तये फलप्रतिपादनपूर्वकं वक्तुं प्रतिजानीते–मन्त्रसङ्केतकमिति । दिव्यं प्रकाशवि (१)मर्शात्मकप(२)रमशिवपराशक्तिप्रतिपादनपरत्वात् । मन्त्रसङ्केतकं मननात्त्रायन्ते साधकमिति मन्त्राः चिन्मरीचयः तद्वाचकत्वाद् वैखरीवर्णविलासभूतानां सौभाग्यविद्यादीनां म(३)ननात्त्राणता । तदुक्तं सङ्केतपद्धत्याम्–

मननात्त्राणधर्माऽसौ मन्त्रोऽयं परिकीर्तितः ॥ इति ।

सङ्केतकं पूर्वोक्तलक्षणम् । (४) अधुना कथयामीति । प्रकाशात्मकोऽहं ते विमर्शरूपिण्याः कथयामि हृदयङ्गमतान्नयामीत्यर्थः । यद्वेत्ता यस्य मन्त्रसङ्केतकस्य वेत्ता ज्ञाता त्रिपुराकारः वे (५)दनसंपरिस्फुरत्परमशिवभट्टारकः वीरचक्रेश्वरो भवेत् वीराः पूर्वोक्तलक्षणास्तेषां चक्रं समूहः तस्येश्वरः प(६)रमशिवः । कोऽर्थः ? एतन्मन्त्रसङ्केतप्रतिपादितश्रीवि(७)द्यादिमन्त्ररहस्यभूतपरभावनाप्रणाशितमोहजालः, अत एव परमशिव एव भवेदित्यर्थः ॥ १ ॥

---

(१) 'विमर्शरूप' ख०
(२) 'परशिव' ख०
(३) 'मननन्त्राणता' ख०
(४) 'अधुना कथयामीति खपुस्तके नास्ति ।
(५) 'वेदनमय एव परिस्फुरितपराभट्टारकैक्यद्धिरि' क०
(६) 'पर' ख०
(७) 'विद्यामन्त्रार्थभूतपरभावनाप्राशस्त्यशाली परशिव एव' ख०

(१)पूर्वोक्तत्रैलोक्यमोहनादिनवचक्रेश्वरीमन्त्रानेवोपक्रम्य मन्त्रसङ्केतकमारभते-करशुद्धिकरीति ।

करशुद्धिकरी त्वाद्या, द्वितीया चात्मरक्षिका ।
आत्मासनगता देवि तृतीया, तदनन्तरम् ॥ २ ॥

---

आत्मतत्त्वगतयोरशुद्धयोरत्र कर्मकरणात्मनोर्द्वयोः ।
शुद्धतत्त्वलयभावनामयी शुद्धिरात्मकरयोः परा मता ॥

इत्यस्मद्गुरूक्तरीत्या कर्मेन्द्रियान्तःपातिनोः क(२)रयोरशुद्धतत्त्वान्तर्गतयोः अशुद्धयोः शुद्धतत्त्वलयभावना शुद्धिस्तत्करीयं विद्या पराहन्ताप्रतिपादनपरत्वात् । अत्रैव वक्ष्यति—

कर्मेन्द्रियाणां वैमल्यात्करशुद्धिकरी स्मृता ।
( यो० हृ० सं० ३ श्लो० १३४ ) इति ।

आद्या त्रैलोक्यमोहनचक्रेश्वरी विद्येत्यर्थः । नन्वत्र करशुद्ध्यादिमन्त्राणां सङ्ख्यामेव करोति, किमिति नोद्धरति ? उच्यते, वामकेश्वरशास्त्र (३)एवासामुद्धारः, अत्र त्वज्ञातार्थप्रतिपादनपरत्वादस्य शास्त्र(४)स्येति न मन्त्रोद्धारः (५)क्रियते इति । द्वितीया चात्मरक्षिकेति ।

भेदलक्षणविपक्षसङ्कटोत्तारणपरमिहात्मरक्षणम् ।

इत्य(६)स्मद्गुरुक्तरीत्या भेदप्रपञ्चलक्षणप्रतिपक्षपराभवरू-

---

( १ ) 'पूर्वमनन्तरोक्तत्रैलोक्य' ख०
( २ ) 'करयोरशु' ख०
( ३ ) 'एतासाम्' क०
( ४ ) 'शास्त्रस्य, अत एव न' क०
( ५ ) 'नोद्धारः क्रियते' ख०
( ६ ) 'इत्यस्मदुक्तरीत्या भेदं प्र' ख०

चक्रासनगता पश्चात्सर्वमन्त्रासनस्थिता ।
साध्यसिद्धासना षष्ठी, मायालक्ष्मीमयी परा ॥ ३ ॥

---

पसङ्कटात् रक्षाम् अभेदप्रतीतिरूपां पराहन्ताप्रति(१) पादनेन वाऽऽत्मनः करोति इत्यात्मरक्षिका द्वितीया सर्वाशापरिपूरका-ख्यद्वितीयचक्रेश्वरी विद्येत्यर्थः । आत्मासनगता देवि तृतीया ।

(२)आत्मचक्रमनुदेवतात्मनामासनं शिवमयत्वभासनम्' ।

इत्यस्मद्गुरूक्तरीत्या साधकचक्रमन्त्रदेवतानां स्वसंविद्रूपतया अनुसन्धानलक्षणासनच(३)तुष्टयविद्यानामादिभूता आत्मासनगता विद्या तृतीया सर्वसङ्क्षोभकरलक्षणतृतीयचक्रेश्वरी विद्येत्यर्थः । तदनन्तरं चक्रासनगता त(४)दनन्तरोक्तचक्रासनगता चतुर्थी विद्या सर्वसौभाग्यदायकलक्षणचतुर्थचक्रेश्वरी विद्येत्यर्थः । पश्चात्सर्वमन्त्रासनस्थिता । अनन्तरोक्तवा(५) सनापूर्वोक्तलक्षणमननत्राणलक्षणाचिन्मरीचिप्रसर-(६)णाखिलावरणदेवतामन्त्रासनस्थिता पञ्चमी विद्या । सर्वार्थसा(७)धकाभिधानलक्षणपञ्चमचक्रेश्वरी विद्येत्यर्थः । साध्यसिद्धासना (८)षष्ठी ।

---

(१) 'पादनपरादात्मनः' क०

(२) 'अष्टचक्रमनुदेवतात्मनां सा विमर्शमनयत् स्वभासनम्' खपुस्तके ।

(३) 'चतुष्टयादिविद्या' क०

(४) 'अनन्तरं चक्रसंकेतोक्तचक्रासनयुक्ता विद्या' ख०

(५) 'वासनामननत्राणाचिन्म' ख०

(६) 'प्रसराखिल' ख०

(७) 'साधनलक्षण' ख०

(८) 'षष्ठी । अनन्तरोक्तवासना । सर्व' क०

मूर्तिविद्या च सा देवि सप्तमी परिकीर्तिता ।

---

सर्वपीठनिवासिन्यः सर्वगाश्चिन्मरीचयः ।
मै (१)रव्यो भरिताकारा रक्षन्तु कुलमातरः ॥

इति प्रामाणिकवचनोक्तरीत्या चिन्म (२)रीचिमयपरिणतावरणदेवताः (३)साध्याः साधकदशायां सप्तषष्टिसङ्ख्यात्रिकोणादिषोडश (४)दलान्तपदगताश्चतुरस्रत्रितयगताश्च देवताः सृष्टिक्रमरूपत्वात्साध्याः । तदुक्तमत्रैव "सृष्टिस्यान्नवयोन्यादिपृथ्व्यन्तम्" ( यो० हृ० सं० १ श्लो० ७८ ) इति । साध्यास्ता एव संहृतिकाले सिद्धाश्चतुरस्रादिबैन्दवान्तक्रमेणोपसंहृताः । तदुक्तमत्रैव "संहृतिः पुनः पृथ्व्यादिनवयोन्यन्तम्" ( यो०हृ०सं० १ श्लो० ७८ ) इति । अत्र सिद्धिः संहारः । तदुक्तमीश्वरप्रत्यभिज्ञायां "चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" इति । (५)(अतः साध्याः सिद्धाश्च साध्यसिद्धाः )। एवं सृष्टिसंहारक्रमेणानुसन्धीयमानानां साध्यसिद्धानामावरणदेवतानाम् आसने स्थिता (६)विद्या साध्यसिद्धासना षष्ठी (७)सा सर्वरक्षाकारनामधेयषष्ठचक्रेश्वरी विद्येत्यर्थः । मायालक्ष्मी (८)मयी परा । मूर्तिविद्या च सा देवी सप्तमी परिकीर्तितेति । अस्या विद्यायाः

---

(१) 'रम्यास्ता वाक्पराकारा' ख०
(२) 'चिन्मरीच्यावरण' ख०
(३) 'साध्याः सृष्टिस्थाः सप्तसंख्याकत्रिकोणादि' ख०
(४) 'दलान्तचक्रगता' ख०
(५) धनुश्चिन्हान्तर्गतं खपुस्तके नास्ति ।
(६) 'स्थिता या विद्या सा साध्य' ख०
(७) खे 'सा' नास्ति
(८) 'लक्ष्मीश्वरीमयी' क०

अष्टम्यावाहिनी विद्या, नवमी भैरवी परा ॥ ४ ॥

---

चतुःशतीशास्त्रे अनुदधृतत्वादत्रोद्धारः क्रियते—माया (१)भुवनेश्वरीबीजं, लक्ष्मीः श्रीबीजं,तन्मयी (२)तत्प्रचुरा । तयोरूर्ध्वगता परा ।

"चतुर्दशयुतं भद्रे (३)त्रिशीर्षान्तसमन्वितम् ।
तृतीयं ब्रह्म सुश्रोणि हृदयं भै (४)रवात्मनः" ॥

इति (५)श्रीपरात्रिं (६)शिकोक्तरीत्या परा परावाचकत्वात्तद्बीजत्रयात्मिका ब्रह्मविष्णुरुद्रात्मकत्वाच्च सा विद्या श्रीमहात्रिपुरसुन्दरीमूर्तिकल्पनायां विनियुक्ता सप्तमी सर्वरोगहराभिधेयसप्तमचक्रेश्वरी विद्येत्यर्थः । अष्टम्यावाहिनी विद्या ।

"आन्तरस्य निजसंविदात्मनो
मातुरत्र करणात्मना बहिः ।
मेयसंविदि समर्पणं तदा-
वाहनं समरसत्वलक्षणम् ॥"

इत्यस्मद्गुरूक्तरीत्या स्वहृदयकमलकर्णिकामध्ये स्फुरन्त्याः संवित्कलायाः "आत्मा मनसा युज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन" इति तन्त्रान्तरोक्तपरिपाट्या (७)बहिरर्थप्रसरणलक्षणा-

---

(१) 'भुवनेशी' क०
(२) 'तद्द्वयोर्ध्वगता' ख०
(३) 'तिथीशान्त' क०
(४) 'भैरवात्मना' क०
(५) 'इति परा' ख०
(६) 'त्रिशकोक्तबीज' ख०
(७) 'बहिः प्रसारणलक्षणावाहने विहिता । अष्टमी सर्वसिद्धिप्रदानाभिधानाष्टम' खपुस्तके पाठः ।

मूलविद्या तथा ख्याता त्रैलोक्यवशकारिणी ।

एवं नवप्रकारास्तु पूजाकाले प्रयत्नतः ॥ ५ ॥

वाहिनी विद्या सर्वसिद्धिप्रदाऽष्टमचक्रेश्वरी विद्येत्यर्थः । नवमी भैरवी परा (१)भैरवी विश्वस्य भरणात् स्थितिहेतुतया रक्षणात्पराचिन्मात्रपर्यवसानलक्षणसंहारकारणतया वमनात्सृष्टिहेतुतया च ॥ ४ ॥

ननु भैरवी चतुःशती (२)शास्त्रोक्ता किमत्र नोद्धृता यतः सप्तमचक्रेश्वरी विद्या चोद्धृतेत्यत आह-(३)मूलविद्येति। मूलं विश्वस्य शिवादेर्भूम्यन्तस्य षट्त्रिंशत्तत्त्वात्मनः प्रकाशविमर्शसामरस्यरूपं (४)परं तेजो (५)वेदयतीति मूलविद्या तथा (६)प्रोक्ता भैरवी कथिता नान्या । अस्यास्तत्रैवोद्धृतत्वान्नात्रोद्धारः । अन्यथा सप्तमचक्रेश्वरीवदत्रोद्धरेत् । वक्ष्यति—

मूलेन व्यापकन्यासः कर्तव्यः परमेश्वरी । इति ।

त्रैलोक्यमुक्तलक्षणं वशीकरोति सर्जने संहारे च स्वायत्तं करोतीति वक्ष्यमाणपूजासङ्केतके वक्तुं योग्यमपि न्यासं नवचक्रेश्वरी(७)विद्यानां प्रसङ्गान्मण्डूकप्लुतिन्यायेनाह-एवमिति । एवमुक्तप्रकारेण नवप्रकारा एताश्चक्रेश्वरीविद्याः साधकेन

(१) 'भैरवी भरणाद्विश्वस्य स्थिति' क०

(२) 'शास्त्रे नोक्ता' ख०

(३) 'मूलविद्या तथा प्रोक्ता त्रैलोक्यवशकारिणीति' ख०

(४) खपुस्तके 'परं' नास्ति ।

(५) 'वेदयिता । मूल' क०

(६) 'ततो ख्याता कथिता' इत्येव कपुस्तके ।

(७) 'विद्यानां' नास्ति क०

एताः क्रमेण न्यस्तव्याः साधकेन (१)कुलेश्वरि ! ॥
पादाग्रजङ्घाजानूरुगुदलिङ्गाग्रकेषु च ॥ ६ ॥
आधारे विन्यसेन्मूर्तिं तस्यामात्राहिनीं न्यसेत् ॥
मूलेन व्यापकन्यासः कर्तव्यः परमेश्वरिः ! ॥ ७ ॥

---

एतद्विद्योपासकेन मोक्षमात्मनः साधयितुमिच्छता, कुलेश्वरी कुलं मेयमानमातृरूपम् । तदुक्तं चिद्गगनचान्द्रिकायाम्—

मेयमातृमितिलक्षणं कुलं
प्रान्ततो (२)व्रजति विश्वमम्बिके । इति ।

तस्य सर्जने संहारे च ईश्वरी । अत्र श्रुतिः—"यथोर्णनाभिः सृजते गृह्णते च" इति । आज्ञावतारेऽप्युक्तम्—

स्वेच्छयैव जगत्सर्वं निगिरत्युद्गिरत्यपि ।

पूजाकाले वक्ष्यमाण (३)सङ्केतोक्तसपर्यासमये, प्रयत्नतः

प्रयत्नस्तदवाप्तौ तु व्यापारोऽतित्वरान्वितः ।

इतितन्त्रान्तरोक्तरीत्या श्रद्धावेशतया क्रमेण न्यस्तव्याः । तत्स्थानान्याह—पादाग्रेति । स्पष्टम् ॥ ६ ॥

आधारे विन्यसेन्मूर्तिं पादाग्रादीनां बाध्यत्वेन प्रसिद्धत्वात् पृथक्करणम् आधारमूर्लनन्तरद्योतनार्थम् । आधारे पूर्वोक्ते चतुर्दल (४)कमले मूर्तिं मूर्तिविद्यां (५)सप्तमीं न्यसेत् । तस्यां मूर्तावेवात्राहिनीं न्यसेत् । 'मूलेन व्यापकन्यासः कर्तव्यः परमे-

---

(१) 'महेश्वरि' क०
(२) 'सृजति यत्र विश्वममिति' ख०
(३) 'सङ्केते क्रमः पर्यायक्रमः प्रयत्नतः' ख०
(४) 'कमले मूर्तिं' नास्ति ख। (५) 'सप्तमीं' नास्ति खे ।

अकुलादिषु पूर्वोक्तस्थानेषु परिचिन्तयेत् ।
चक्रेश्वरीसमायुक्तं नवचक्रं पुरोदितम् ॥ ८ ॥

श्वरि'। मूलेन नवमचक्रेश्वरीविद्यया सौभाग्यविद्ययेति यावत्। स्पष्टमन्यत्॥ ७ ॥

नवचक्रेश्वरीविद्यानां न्यासमुक्त्वा तदाधारभूतनवचक्राणामपि चिन्तालक्षणमान्तरन्यासमाह–अकुलादिष्विति । अकुलादिषु "अकुले विषुसंज्ञे च" (यो० हृ० सं० १श्लो० २५) इत्यत्र पूर्वोक्तस्थानेषु । आदिशब्देनाष्टौ (१)वन्हि–शाक्त–नाभि–अनाहत–विशुद्ध–लम्बिकाग्र–भ्रूवोरन्तर–(२)इन्दवो गृह्यन्ते । पुरोदितं चक्रस(३)ङ्केतोदितं नवचक्रं चक्रेश्वरीसमायुक्तं नवचक्रेश्वर्यधिष्ठितं परिचिन्तयेत् । (४)कोऽर्थः ? अकुले सुषुम्नामू(५)लारुणसहस्रदलकमले त्रिपुराधिष्ठितं त्रैलोक्यमोहनचक्रं, वन्ह्याद्याधारे चतुर्दलकमले (६)त्रिपुरेश्यधिष्ठितं सर्वाशापरिपूरणं चक्रं, शाक्ते स्वाधि(७)ष्ठानास्थितषड्दलकमले त्रिपुरसुन्दर्यधिष्ठितं सर्वसंक्षो(८)भणं चक्रं, नाभौ दशदलकमले त्रिपुरवासिन्यधिष्ठितं सर्वसौभाग्यदाय (९)क-

(१) 'विषु' शब्दोऽधिक कपुस्तके ।

(२) यद्यप्यत्र कखयोरुभयोरपि पुस्तकयोः 'रन्तरबिन्दवो' इत्येव पाठस्तथाऽपि स न समीचीन इत्युपेक्षितः ।

(३) 'सङ्केतोदितं नवचक्रेश्वरी' क० ।

(४) 'कोऽर्थः' नास्ति ख० ।

(५) 'मूलभागे' ख० ।

(६) 'त्रिपुरेश्वरीयुक्तं' ख०

(७) 'ष्ठाने सित' क०

(८) 'क्षोभकं' ख०

(९) 'दायकम्, अ' क०

(१)तासां नामानि वक्ष्यामि यथानुक्रमयोगतः ।
तत्राद्या त्रिपुरा देवी, द्वितीया त्रिपुरेश्वरी ॥ ९ ॥
तृतीया च तथा प्रोक्ता देवी त्रिपुरसुन्दरी ।
चतुर्थी च महादेवी देवी त्रिपुरवासिनी ॥ १० ॥
पञ्चमी त्रिपुरा श्री स्यात्, षष्ठी त्रिपुरमालिनी ।
सप्तमी त्रिपुरा (२)सिद्धिरष्टमी त्रिपुराम्बिका ॥ ११ ॥
नवमी तु महादेवी महात्रिपुर(३)सुन्दरी ।

चक्रम्, (४)अनाहते द्वादशदलकमले त्रिपुरा(५)श्रीसमधिष्ठितं सर्वार्थसाधकं चक्रं, विशुद्धौ[द्धे]षोडशदलकमले त्रिपुरमालिन्यधिष्ठितं सर्वरक्षाकरं चक्रं, लम्बिकाग्रे ता(६)लुमूले अष्टदलकमले त्रिपुरासिद्ध्यधिष्ठितं सर्वरोगहरं चक्रं, भ्रूवोरन्तरे द्विदलकमले त्रिपुराम्बिकाधिष्ठितं सर्वसिद्धिप्रदं चक्रम्, इन्दौ ललाटे बिन्दौ महात्रिपुरसुन्दर्यधिष्ठितं सर्वानन्दमयं चक्रं भावयेदित्यर्थः ॥ ८ ॥

(७)पूर्वोक्तविधानान्नवचक्रेश्वरीणां नामान्याह—तासामिति । स्पष्टम् ।

ननु (८)एता विद्या नवचक्रेश्वर्यः (९)पादाग्रादिष्वकु-

(१) 'आसां' ग०, ख पुस्तके च 'इदमर्धं नास्ति ।
(२) 'सिद्धा त्वष्ट' क०
(३) 'त्रिपुरभैरवी' क०
(४) 'अनाहते हृदि द्वादश' ख०
(५) 'श्रीअधि' क०
(६) 'तालुमूले' खपुस्तके नास्ति
(७) 'पूर्वोक्तानाम्' क०
(८) 'एताश्च' ख०
(९) 'पादादिष्वकुलादिस्थानेषु' ख०

पुजयेच्च क्रमादेता नवचक्रे पुरोदिते ॥ १२ ॥
एवं नवप्रकाराद्या पुजाकाले तु पार्वति ! ।
एकाकारा ह्याद्यशक्तिरजरामरकारिणी ॥ १३ ॥

लादिषु स्वस्वस्थानेषु च (१)स्वरूपेण भावनारूपेण क्रमेण न्यस्तव्या(२)एव किम् ? नेत्याह–पूजयेदिति । एताः पुरोदितास्त्रिपुराद्या वि(३)द्या नवचक्रे(४)श्वर्यः पुरोदिते "त्रैलोक्यमो(५)हनं चक्रम्"(यो० हृ० सं०१ श्लो०८३) इत्यादिपूर्वोक्ते नवचक्रे इत्येकवचनमन्योन्याविश्लेषकथनार्थम् । अकुलादिनवस्थानेषु अन्योन्यसंयुक्ततयै(६)व विभावितेषु नवचक्रेष्वित्यर्थः । क्रमात्पूजयेच्च त्रैलोक्यमोहनं चक्रमारभ्य प्रतिचक्रमेकैकं क्रमेण पूजयेदित्यर्थः ॥ १२ ॥

ननु किमासान्नवधा(७)त्वं स्वाभाविकं ? नेत्याह–एवमिति । आद्या शिवादिक्षित्यन्तस्य जगतो निदानत्वात् । आद्या शक्तिराद्यशक्तिः । आद्यस्य सकलवर्णादिभूतस्य प्रकाशात्मनः परशिवस्य शक्तिर्विमर्शरूपिणी एकाकारा परा पूजाकाले तेन निरन्तरं सामरस्यमापन्ना अपरा पूजाकाले तु(८)तथा न भवति । एवमुक्तप्रकारेण नवप्रकारा नवविधा भिन्ना एवंविधपूजक-

(१) 'स्वरूपेण' नास्ति ख०
(२) 'एव नेत्याह' ख०
(३) 'विद्या' नास्ति क०
(४) 'चक्रेश्वरीपुरोदित त्रैलोक्य' ख०
(५) 'मोहनचक्रे इत्यत्र पूर्वोक्ते' क०
(६) 'तयैव भावि'क०
(७) 'धात्वं तात्त्विकं न वेत्याशङ्क्याह' क०
(८) 'तु' शब्दो नास्ति के ।

मन्त्रसङ्केतकस्तस्या नानाकारो व्यवस्थितः ।
नानामन्त्रक्रमेणैव पारम्पर्येण लभ्यते ॥ १४ ॥
षडविधं (१)स्तं तु देवेशि ! कथयामि तवानघे ! ।

---

स्याजरामरकारिणी अजरामरः उक्तलक्षणः शिवः, तत्त्वमस्य करोति । अत्रैव वक्ष्यति—

तव नित्योदिता पूजा त्रिभिर्भेदैर्व्यवस्थिता ॥ इति ॥१३॥

प्रासाङ्गिकमुपसंहृत्य प्र(२)कृतमेव प्रधानं मन्त्रसङ्केतमुद्दिशति—मन्त्रसङ्केतक इति । तस्याः परमशिवसामरस्यरूपायाः परायाः (३)यो मन्त्रसङ्केतकः मन्त्रः सौभाग्यविद्यारूपः तस्य सङ्केतो गूढार्थप्रदर्शनं नानाकारः अनन्तरवक्ष्यमाणषड्विधरूपः । नानामन्त्रक्रमेणेति । अनन्तरं पूर्वोक्तकरशुद्ध्यादिनानाप्रपञ्चपरिपाट्यैव पारम्पर्येण लभ्यते । सोपानावरोहरीत्या शिवादिस्वगुरुपर्यन्तपरम्परोपदेशक्रमेण लभ्यते, नान्यथा । पारम्पर्यविहीनानामसंप्रदायवतां चुम्बकवृत्त्या चौर्यावगताक्षरपाठमात्रपर्यवस्थितानामनर्थायैव केवलमित्यर्थः । अत्रैव वक्ष्यति—

पारम्पर्यविहीना ये ज्ञानमात्रेण गर्विताः ।
तेषां समयलोपेन विकुर्वन्ति मरीचयः ॥ इति ॥ १४ ॥

उद्दिष्टस्य मन्त्रसङ्केतस्य विभागं प्रतिजानीते—षड्विध इति । षड्विधः अनन्तरवक्ष्यमाणभावार्थादिप्रकारेण षड्विधः अनघे परशिष्यत्वादिदोषरहिते तव मदंशरूपाया विमर्शशक्तेः

---

(१) 'षड्विधं तन्तु' क०
(२) 'प्रकृतमेव मन्त्रसङ्केतकमुपदिशति' क०
(३) 'यो मन्त्रः' ख०

भावार्थः,सम्प्रदायार्थो,निगमार्थश्च,कौलिकः॥१५॥
तथा सर्वरहस्यार्थो, महातत्त्वार्थ एव च।
अक्षरार्थो हि भावार्थः केवलः परमेश्वरि! ॥१६॥
योगिनीभिस्तथा वीरै(१)र्वीरेन्द्रैः सर्वदा प्रिये ।

---

प्रकाशात्मकोऽहं(२)तं तु षड्विधं कथयामि ।

(३)तद्विभागमाह—भावार्थ इति । वक्ष्यमाणलक्षणत्वा-त्स्प(४)ष्टोऽर्थः । षोढाप्रकारेण लक्षणानि कथयिष्यन्नादौ भा-वार्थमाह—अक्षरार्थ इति । न क्षरन्तीत्यक्षराणि नित्यप(५)-रशिववाचकत्वात् । किञ्च ताल्वोष्ठव्यापारोऽभिव्यञ्जकस्ते-षाम् । अत एवाक्षराण्येवाक्षराणि तेषामर्थोऽभिधेयः । श्रीसौ-भाग्यविद्याऽवयवपञ्चदशाक्षराणामर्थो भावार्थः ॥ १६ ॥

अक्षरार्थमेवाह—योगिनीभिरिति । योगिन्यः योगः शिव-सम्बन्धो नित्यं विद्यते आसामिति योगिन्यः विमर्शशक्त्यंशभूते-च्छाज्ञानक्रि(६)यात्मकभारतीपृथ्वीरुद्राण्यः, वीराः उक्तार्थाः, तद्योगिनीनित्यस(७)म्बन्धभूताः प्रकाशांशभूताः वामाज्येष्ठा-रौद्र्यात्मकब्रह्माविष्णुरुद्राः सृष्टिस्थितिसंहारकर्तारः, वीरेन्द्राः सृ-

---

(१) 'वीरेन्द्रैश्च सदा' क०
(२) 'त्मकोऽहं कथयामि' ख०
(३) 'तद्विभागं कथयामीत्यर्थः । भावार्थः' क०
(४) 'स्पष्टोऽर्थः । तत्रादौ भावार्थस्य लक्षणमाह षोढाविभ-ज्यलक्षणानि' क०
(५) 'परशिववाचकात् ताल्वोष्ठपुटव्यापारो' क०
(६) 'क्रियात्मका' क०
(७) 'सम्बन्धाः प्रका' क०

शिवशक्तिसमायोगाज्जनितो मन्त्रराजकः ॥ १७ ॥

सृष्टिस्थिति(१)संहारपदा अतीतानाख्याधिकारिणस्ते शान्ताम्बिकात्मानः शिवशक्तिमिथुनत्रयसमष्टिरूपाः त्रिबीजशिखरवर्तिकामक (२)लात्रयाभिधेयाः एतैः विद्याक्षराभिधेयमयैः मिथुनचतुष्टयैः शिवशक्तिसमायोगाच्छिवशक्त्योः समायोगः सम्पर्क(३)स्तमन्त्रराजकः सौभाग्यविद्यारूपः सकलमन्त्रोत्तमत्वाज्जनितो जातः आ(४)दिकर्मणि क्तः, जातः भावित इति; यावत् । तस्यार्थस्य नित्यत्वात् । अयमेवार्थो मया सौभाग्यसुभगोदये प्रपञ्चितः । यथा—

सैव महाविद्यात्मा माता चतुरन्वयैकविश्रान्तिः ।
चतुराननादिजननी जाता चतुरात्मवर्गफलदात्री ॥
अस्वरविमर्शरूपौ स्वांशौ हित्वा चतुष्कलौ सैव ।
वामादीच्छादिमयान्यकरोद् द्वन्द्वान्यमूनि चत्वारि ॥
वामांशो ब्रह्मा स्यादिच्छैव तस्य भारती शक्तिः ।
अनयोरेतान्मिथु(५)नं सृष्टिः प्राग्वाग्भवात्मकं बीजम् ॥
ज्येष्ठांशो विष्णुः स्याज्ज्ञा(६)नं विश्वम्भरा तयोर्मिथुनम् ।
इदमेव दक्षिणान्वयरूपं श्रीकामराजमध्यास्ते ॥
रौद्र्यात्मकस्तु रुद्रः क्रियामयी शक्तिरस्य रुद्राणी ।
युगलमिदं तार्तीयं बीजं पालयति पश्चिमाम्नायम् ॥

---

(१) 'संहारपदातीतानामाख्याकारिणः' ख०
(२) 'कलाभिधेयाः तैः' क०
(३) 'सम्पर्कस्तान्मिथुनीकृत' ख०
(४) 'आदितः श्रुतः' क०
(५) 'थुनं शास्ति प्रागन्वयात्मवाग्बीजं' क०
(६) 'ज्ञाना' क०

ह्स्यादम्बिकास्वरूपः शम्भुः शान्तात्मिकाऽस्य शक्तिः स्यात् ।
मिथुनमिदं शिवशक्त्योरुत्तरसमयात्मतुर्यमधितिष्ठेत् ॥
एवमनुत्तरशक्त्योश्चतुरंशद्वन्द्वरूपिणी जाता ।
चतुरन्वयात्मिकेयं पश्यन्ती मातृकामयी विद्या ॥
सृष्टिः पूर्वाम्नायो वाग्भवबीजं तदात्मकं त्रिविधम् ।
सृष्टिस्थितिसंहारैर्भिन्ना सृष्टिस्त्रिमूर्तिमूर्तिः स्यात् ॥
ब्रह्माऽत्र सृष्टिसृष्टावधिपातिरेतस्य भारती शक्तिः ।
सो(१)यं हस्यार्थः स्यात्स एव शिवशक्तिवा(२)चकश्चापि ॥
हस्यार्थः स्यादत्र स्वशक्तिमयरूपसार्णसंयोगात् ।
सृष्टिस्थितौ तु विष्णुः कर्ता विश्वंभराऽस्य शक्तिः स्यात् ॥
विष्णुः कलिपेरर्थो ललिपेरेतस्य शक्तिरर्थः स्यात् ।
रुद्रोऽधिपतिः शक्ती रौद्री (३)स्यात्तत्र सृष्टिसंहारे ॥
ह(४)रवर्णयुगलमनयोर्वाचकम(५)र्थो ऽत्र रस्य रुद्रः स्यात् ।
रुद्राक्षरसम्पर्काद्रौद्री तच्छक्तिरत्र हस्यार्थः ॥
अत्र तु (६)शक्त्यर्णस्य प्राथम्यं शक्तिबीजभूतत्वात् ।
अधिवसतः शिवशक्ती सं(७)ज्ञानाख्या तयोस्तु(८)त्रित्वमयी ॥
कामकलाकलयित्री (९)तुर्यमयी रक्तशुक्लमिश्रतनुः ।

---

(१) 'सेयं सस्यार्थः' क०
(२) 'वाचकस्यापि' क०
(३) 'स्यादत्र' क०
(४) 'हसवर्ण' क०
(५) 'मर्थोऽक्षरस्य' क०
(६) 'शक्तिर्नस्यात्' क०
(७) 'सत्यज्ञाना' क०
(८) 'स्तुतत्रिमयी' ख०
(९) तुरीयमयी' क०

रक्तो बिन्दुः शक्तिः शुक्लः शम्भुः परस्तदैकात्म्यम् ॥
एवं द्वितीयबीजं स्थितिरूपं दक्षिणान्वयात्म स्यात् ।
स्थितिसृष्ट्यादिविभेदाद्वसन्ति ता एव देवतास्तत्र ॥
अत्र कलवर्णमध्यस्थितो हकारः स्थितिस्वरूपत्वम् ।
अस्य द्योतयति (१)परं स्थितिरूपं संविदम्बिकाकारः ॥
संहारात्मकपश्चिमसमये (२)तद्वदेव तार्तीयम् ।
संहृतिसृष्ट्यादिवशात् (३)सन्ति ता एव देवतास्तत्र ॥
सृष्टौ शक्तेर्नियत(४)प्राधान्यादस्य शक्तिबीजत्वात् ।
स्वात्मनि संहृतिसृष्टौ शिवमन्तर्भाव्य विभासते शक्तिः ॥
त्रिमये तुरीय(५) बीजेऽनाख्यारूपोत्तरान्वयात्मनि तौ ।
शक्तिशिवावधिवसतो निरन्तरं सामरस्यमापन्नौ ॥
सृष्ट्यादिभेदभिन्नश्रीविद्यावर्णयुगलनवकात्मा ।
नवनादवर्गरूपा माता सा म(६)ध्यमाऽभिधा वितता ॥
शब्दस्पर्शौ रूपं रसगन्धौ चेति भूतसूक्ष्माणि ।
व्याप्यव्यापकभावात्पञ्चदश स्युः क्रमेण तत्सङ्ख्याः ॥
तिथयश्च कला नित्यास्तदात्मिकाः स्युस्तथैव तत्सङ्ख्यैः ।
वर्णैः समष्टिरेषा विद्या व्याप्नोति तानि सर्वाणि ॥
सर्गादिसमष्टिरूपःस्वां(७)शैरेभिस्तदात्मना विततः ।
सर्गेण कादिवर्णैरपि षट्त्रिंशद्भिरात्मनोऽवयवैः ॥

---

( १ ) 'परध्वनिरूपः संविदम्बराकारः' ख०
( २ ) 'तत्तद्वदेव तार्तीये' ख०
( ३ ) 'ता एवात्रापि देवता न्यवसन् ' ख०
( ४ ) 'प्राधान्याच्चास्य' ख०
( ५ ) 'बीजेऽनाख्ये' क०
( ६ ) 'मध्यमा वितता विमला' क०
( ७ ) स्वांशैरणुभिः' ख०

तन्मयीं परमानन्दनन्दितां स्पन्दरूपिणीम् ॥

निसर्गसुन्दरीं देवीं ज्ञात्वा स्वैरमुपासते ॥ १८ ॥

---

पुनरजूव्यञ्जनबिन्दुभेदभिन्नांस्तदक्षरावयवान् ।

षट्त्रिंशत्सङ्ख्याकांस्तत्त्वमयानश्नुते हि सा माता ॥

व्यष्टिसमष्टिविभेदैश्चतुरात्मा तत्त्वबीजपीठमयी ।

चतुरन्वयात्मनाऽपि च(१)माताष्टकमातृकामयी विद्या ॥

तुर्यमन्त्रस्यार्थमाह—तन्मयीमिति । (२)तन्मयीं भारत्यादिब्रह्मादि(३)मिथुनत्रयवाचकबीजत्रयसमष्टिरूपां (४)तुरीयमन्त्रवाच्यां परमानन्दनन्दितां परमशिवसामरस्यपरिस्फुरत्परमानन्द(५)निर्भरां स्पन्दरूपिणीं शिवादिक्षित्यन्तषट्त्रिंशत्तत्त्व(६)स्पन्दरूपेण व्यक्तनिजविभवां निसर्गसुन्दरीं सर्वप्राणित्वात्मतया (७)परप्रेमास्पदीभूतां देवीं महात्रिपुरसुन्दरीं प्रकाशविमर्शसामरस्यरूपिणीं परां ज्ञात्वा (८)स्वात्मतया स्वैरमुपासते स्वातन्त्र्येण विहरन्ति, स्वैराचारपरा भवन्तीत्यर्थः ।

अत्रैव वक्ष्यति—

स्वैराचारेण सम्पूज्या त्वहन्तेदन्तयोः समा ।

( यो० हृ० सं० १ श्लो० २५ ) इति ॥ १८ ॥

---

( १ ) 'वितता सा मातृका' क०

(२) 'तन्मयीम् । ब्रह्मादि' क०

(३) 'चतुर्मिथुनवाचक' क०

(४) 'तुरीयमन्त्रवाच्यां' खपुस्तके नास्ति

(५) 'शालिनीं' ख०

(६) 'स्पन्दरूपिणीम अध्वत्रयनिज' ख०

(७) खपुस्तके 'पर' नास्ति ।

(८) खपुस्तके 'स्वा' नास्ति ।

शिवशक्त्यात्मसङ्घट्टरूपे ब्रह्माणि शाश्वते ॥
तत्प्रथाप्रसराश्लेषभुवि त्वैन्द्रोपलक्षिते ॥ १९ ॥

मन्त्रशब्दार्थमाह—शिवशक्त्यात्मेति। शिवशक्त्यात्मसङ्घट्टरूपे शिवशक्त्यात्मनोः प्रकाशविमर्शमययोः सङ्घट्टः सामरस्यं तद्रूपे, ब्रह्माणि 'बृह' वृद्धावित्यस्माद्धातोर्बृंहणत्वादात्मैव ब्रह्मेति वैयाकरणोक्तरीत्या सर्वप्राणिष्वात्मनि, शाश्वते भूतभविष्यत्कालशालिनि, तत्प्रथाप्रसराश्लेषभुवि तच्छब्देन प्रकाशात्मा परामृश्यते। तदुक्तं श्रीभगवद्गीतायाम्—

ॐतत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृतः। इति।

(१)तस्य शिवस्य प्र(२)काशमयस्य प्रथा विमर्शशक्तिः। यथा (३)दीपस्य प्रभा तद्वत्तस्याः प्रसरः षट्त्रिंशत्तत्त्वात्मना परिणामः तस्याश्लेषः शिवस्तावन्मात्रस्य पर्यवसानं तस्य भुवि विश्रान्तिस्थाने। अत्र श्रुतिः—"सर्वं खल्विदं ब्रह्म" (४)इति, "तज्जलानिति शान्त उपासीत" इति। (५)ऐन्द्रोपलक्षिते (६)इदि परमैश्वर्ये, परमैश्वर्यवानिन्द्रः। अत्र श्रुतिः—"इन्द्रो मायाभिः पुरुरूप ईयते" इति। तत्सम्बन्धि ऐन्द्रं कर्म तेनोपलक्षिते। काकवद्देवदत्तगृहमितिवद्विश्वसर्जनादिव्यवहारः अस्योपलक्षणं न तु स्वरूपधर्म इति यावत्। प्रकाशविमर्शसामरस्य-

(१) 'तस्य' खपुस्तके नास्ति।
(२) 'प्रकाशस्य' ख०
(३) 'दीपस्य तत्प्रथायाः प्रसरः' ख०
(४) 'इति। तज्जलानिति शान्त उपासीत इति'नास्ति कपुस्तके।
(५) 'तत्रोप' ख०
(६) 'इदि परमैश्वर्ये' नास्ति खे

(१)ज्ञातृज्ञानमयाकारमननान्मन्त्ररूपिणी ॥
तेषां समष्टिरूपेण पराशक्तिस्तु मातृका ॥ २० ॥

---

रूपे नित्ये विश्वसृष्टिस्थितिसंहारकारिणि (२)साक्षिणि तत्प्रकृत्यात्मकमहदैश्वर्यपरामृष्टे परमात्मनि विषये (३)ज्ञातृज्ञानमयाकारमननात् (४)ज्ञातुरादरनैरन्तर्यपाटवाभ्याससद्भावतत्प्रकर्षलक्षणमननात्तन्मयाकारभावनालक्षणत्राणान्मन्त्ररूपिणी । कोऽर्थः ? उक्तविशेषण(५)विशिष्टपरप्रकाशविषयमननात्स्वसाधकं तन्मयरूपताप्रतिपादनेन त्रायत इति निरुक्त्या तुरीयलक्षणमहामन्त्ररूपिणीयमित्यर्थः । ननूक्तविशेषणविशेषिता तुर्यमन्त्र(६)रूपिणीयं किंविशिष्टलक्षणेत्यत आह—तेषामिति । तन्मयीमिति पूर्वोक्तमेव तेषां ब्रह्मादीनां भारत्यादीनां च सृष्ट्यादिसमष्टिरूपलक्षणेन लक्षिता परा शक्तिः । तुरवधारणे । पराशक्तिरेव

न तस्य कार्यं करणं च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ॥

इति श्रुतिप्रतिपादिता परैव मातृका अखिलमनाहतमूर्त्तिमत्युत्तीर्णस्वरूपिणी भवति ।

---

(१) 'ज्ञातृज्ञानमयाकारकरणान्मन्त्ररूपिणीम्' ख० ग०
(२) 'साक्षिणि' नास्ति खपुस्तके ।
(३) 'ज्ञातृज्ञानमयाकारमननात्' खपुस्तके नास्ति ।
(४) 'ज्ञातुरानन्दनैरन्तर्याभ्यासतद्वासना[त]त्प्रकर्ष' क०
(५) खपुस्तके 'विशिष्ट' नास्ति ।
(६) 'रूपिणी किंलक्ष' ख०

मध्यबिन्दुविसर्गान्तः समास्थानमये परे ॥

---

कायति नानानामप्रपञ्चरूपेण मातृका देवी।

इ(१)त्यस्मद्गुरूक्तरीत्या (२)परा मातृका पश्यन्ती-मध्यमा-वैखरी-रूपेण व्यापृता। अत्र श्रुतिः—

चत्वारि वाक्परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति
तुरीयं वाचो मनुष्या वदन्ति ॥

(३)अयमर्थः-ब्रह्मादिभारत्यादिसमष्टिरूपतालक्षणा पश्यन्ती-मध्यमा-वैखरी—रूपविस्तारप्रकाशविमर्शसामरस्य(४)रूपा तुरीयमन्त्रवाच्येति ॥ १९ ॥ २० ॥

नन्वियमकारहकारसामरस्यरूपा परैव तुरीय(५)मन्त्रविशेषणविशेषिता तुरीयपदवाच्येत्युक्तम्। तद्वर्णद्वयं (६)मन्त्रेषु कुत्र कुत्र निवसतीतिचेत्! एतन्मन्त्रस्य तद्वर्ण(७)द्वयवाच्यायाः परायाश्च कः सम्बन्ध इत्यत आह—मध्येति। तस्याः परायाः मध्यबिन्दुविसर्गान्तसमास्थानमये। मध्यबिन्दुः ऊर्ध्वबिन्दुः अकारहकारसामरस्यरूपः कामाख्यः। तदुक्तं कामकलाविलासे—

---

(१) 'इत्यस्मदुक्त' ख०
(२) 'परा' नास्ति ख०
(३) 'वदन्ति इति एवमर्थः' ख०
(४) 'रूपा तुरीयमन्त्रपदावाच्येति' ख०
(५) 'विशेषणविशेषिता तुरीयपद' खपुस्तके नास्ति।
(६) 'मन्त्रे कुत्र नि' ख०
(७) 'द्वयवाच्यायाश्च' इत्येव खपुस्तके।

कुटिलारूपके तस्याः प्रतिरूपे वियत्कले ॥ २१ ॥

---

"बिन्दुरहङ्कारात्मा रविरेतान्मिथुनसमरसाकारः ।
कामः कमनीयतया" इति ।

(१)विसर्गस्तन्निरासरूपः बिन्दुद्वयात्मकः । अकारः षोडशस्वरः । तदुक्तं तत्रैव—"कला च दहनेन्दुविग्रहौ बिन्दू" इति । तयोरन्तः (२)कामस्य कलायाश्च द्वयोरपि मध्ये समास्थानमये (३)निरासरूपे परे अहाक्षरे । वर्णानामाद्यन्तत्वादन्त्यापेक्षया आदेरकारस्य परत्वमाद्यापेक्षयाऽन्त्यस्य हकारस्य परत्वम् । तेन परे (४)अक्षरे वर्णानामाद्यन्ते अकारहकाररूपे अक्षरे कथ्येते । कुटिलारूपके कुटिले अकुलकुलकुण्डलिन्यौ कुटिलरूपत्वात् एते एव रूपे ययोस्तयोः प्रतिबिम्बरूपे वियत्कले वियच्छब्देन शून्यं लक्ष्यते । तेन वियद् बिन्दुः, कला बिन्दुद्वयमात्रावती हकारलिपिः । कोऽर्थः ? (५)अकारः (६)शिवशक्तिसामरस्यरूपाकारस्तद्वासरूपकलाक्षरावयव(७)रूपाबिन्दुद्वयान्तर्गतमात्रारूपे निवसति (८)अहौ एव द्वे अप्यक्षरे अकुलकुलकुण्डलिनीरूपे परायाः

---

(१) 'विसर्गस्य बिन्दुन्यासरूपं बिन्दुद्वयं नत्वः (? तत्त्वा)कारः । तदुक्तं' खपुस्तके ।

(२) कामाख्यस्य कलयोर्द्वयोरपि' ख०

(३) 'निवास' ख०

(४) 'अक्षर पिनामा' ख०

(५) खपुस्तके 'अकारः' नास्ति ।

(६) 'शिवशक्तिसामरस्यरूपमायोर्ध्वबिन्द्वन्तर्गतो निवसति हकारः तस्य व्यासरूपकला' खपुस्तके पाठः ।

(७) 'रूप' नास्ति ख०

(८)'अहौ एव' नास्ति क०

मध्यप्राणप्रथारूपस्पन्दव्योम्नि स्थिता पुनः ॥
मध्यमे मन्त्रपिण्डे तु तृतीये पिण्डके पुनः ॥ २२ ॥

---

रूपे तदवयवत्वात्तयोः परारूपयोः प्रतिबिम्बरूपे अहङ्काराक्षरे अकारहकारयोः (१)स्फुरणत्वादित्यर्थः ॥ २१ ॥

मन्त्रनिदानभूतकामकलायाम् अकारहकारयोः स्थितिमिह उत्पाद्य इदानीं मन्त्रे तद्वर्णद्वयस्य स्थितिक्रमेण (२)वासनामाह—मध्यप्राणेति । मध्यमे मन्त्रपिण्डे वाग्भवशक्तिबीजयोः मध्यगते कामराजबीजाख्ये षडक्षरपिण्डे मध्यप्राणप्रथारूपस्पन्दव्योम्नि स्थिता (३)पुनः । मध्यः प्राणः कामकलाशोणबिन्दुमध्यगतप्राणो हकारः तस्य प्रथा पृथुत्वेन प्रतीतिः श्रुतिगोचरत्वात् तद्रूपस्पन्दव्योम हकारः तस्मिन्व्योम्नि पुनः स्थिता हकारस्य विमर्शशक्तेः स्फूर्तिमयत्वात् । तदुक्तं सङ्केतपद्धत्याम्—

हकारोऽन्त्यकलारूपो विमर्शाख्यः प्रकीर्तितः । इति ।

तृतीये पिण्डे शक्तिबीजाख्ये चतुरक्षरपिण्डे पुनस्तत्रैव । द्वितीयबीजवत् स्फुटीभावे न स्फुरति । किन्तु राहुकूटद्वयस्फूर्जत् । राहुकूटः शषसहानां वर्णानां (४)वर्गः । कूटो वर्णसमूहः । यथा पञ्चकूटः षट्कूट इति । राहुकूटे अद्वयो वर्णः द्वितीयादन्यः तृतीयः सकारः तद्वर्गतृतीयवर्णत्वात् षोढान्यासे शषसहराहुवर्गः ।

---

(१)'स्फुरणमस्फुरितत्वा' ख०
(२)'वासनाम्' नास्ति ख०
(३)'पुनः' खपुस्तके नास्ति
(४)'वर्गः । तथा च पञ्चकूटं षट्कूटमिति । राहुकूटे' खपुस्तके पाठः । तत्रैव 'पञ्चकूटं षट्कूटमिति' नाशितं च ।

(१)राहुकूटाद्वयस्फूर्जत् चलत्तासंस्थितस्य तु ॥

---

अत्रैव वक्ष्यति—

वक्रेशादिचतुर्वर्णैः सहितं राहुमेव च । इति ।

पुनः राहुकूटद्वयस्फूर्जदिति । राहुकूटे तृतीयसकारोपरि अविभागेन स्फूर्जत् प्रकाशमानं सकलवर्णाद्यम् अनुत्तरं अक्षरम् । तदुक्तं सङ्केतपद्धत्याम्—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः । इति ।

(२)कोऽर्थः ? परावयवभूतावकारहकारावेव कामकलोर्ध्वबिन्दौ मात्रायां (३)च स्थित्वा पुनः स्थूलभावमासाद्य पृथग्भूतौ कामराजबीजान्तर्गतककारलकारमध्यगतहकारे शक्तिबीजादिभूतसकारादूर्ध्वगताकारे चाधिवसत इत्यर्थः । ननु(४)प्रथमपिण्डे विद्यमानेऽपि मध्यपिण्डे तृतीयपिण्डे च परावयवभूतयोरकारहकारयोः कथमवस्थानमुक्तं ? प्रथमबी(५)जे किमिति नोक्तम् ? उच्यते । दक्षिणस्रोतःपक्षपातिन्याः सौभाग्यदेवतायाः परायाः परा(६)परशक्तिप्रधानत्वात् स्थितेश्च परापरशक्त्यधिष्ठितत्वान्मध्यबीजस्य स्थितिरूपत्वादत्र विमर्शशक्तेरेव स्थानमुक्तम् । शिवस्य संहाररूपत्वाच्छक्तिबीजस्य च संहारात्मकत्वात्प्रकाशस्य तत्रावस्थानमुक्तं विशेषेण । सामान्यतस्तु वाग्भवे । अत एव

---

(१)'राहुकूटद्वय' क० ख०

(२)'कोऽर्थः' नास्ति खपुस्तके ।

(३)'चेति' ख०

(४)'प्रथमपिण्डे विद्यमानेऽपि' नास्ति ख०

(५)'बीजे तु नोक्तं' क०

(६)'कपुस्तके 'पर' नास्ति ।

धर्माधर्मस्य वाच्यस्य विषामृतमयस्य च ॥२३॥
वाचकाक्षर(१)संयोगात्कथिता विश्वरूपिणी ॥
तेषा समष्टिरूपेण (२)पराशक्तिं तु मातृकाम्॥२४॥
कूटत्रयात्मिकां देवीं समष्टिव्याष्टिरूपिणीम् ।

---

तदक्षर(३)द्वयसम्बन्धाद्विश्वरूपत्वञ्चेति न परायाः कथितमित्याह–चलत्तेति । चलतो भावश्चलत्ता तस्यां संस्थितस्य, चलत्वन्नामात्र (४)नश्वरम् । अत्र विशिष्टक्रियाविद्याचक्रतत्त्वादिसकलप्रपञ्चस्थितस्य धर्माधर्मस्य पूर्वोक्तनिर्वचनधर्माधर्मपदवाच्यस्य शिवशक्तिद्वयस्य विषामृतमयस्य च(५) विषं संसारः मोहहेतुत्वात् । अमृतं मृतं (६)मरणं तद्रहितत्वान्मुक्तिः । अत्र श्रुतिः "तमेवं विद्वानमृत इह भवति" इति । तन्मयस्य तदुभयहेतुत्वात् । तयोर्वाच्यस्याभिधेयस्य वाचकाक्षर(७)संयोगादेतदुभयात्मकशिवशक्तिमयवाच्यवाचकाकारहकारसंयोगाद्विश्वरूपिणी विद्याचक्रतत्त्वादिमयरूपिणी । अत एव (८)च तेषां सर्वेषां समष्टिरूपेण (९)त्रित्रिमयेन सर्वेण पराशक्तिं विश्वोत्तीर्णस्य प(१०)रमाशि-

---

(१)'संयुक्ते क' ख० 'संयुक्तेः क' ग०
(२)'पराशक्तिस्तु मातृका' ख०
(३)'द्वयसम्भवात् । तद्विश्वमयत्वं न परायाः' ख०
(४)'नश्वरमात्राविशिष्टक्रियामयाविद्या' क०
(५)'च' नास्ति ख०
(६)'मृतिर्मरणं' क०
(७)'संयुक्तेस्त' ख०
(८)'च' नास्ति ख०
(९)'त्रित्रिमयेण' ख०
(१०)'परशिवस्य' ख०

आद्यां शक्तिं भावयन्तो(१)भावार्थमिति मन्वते २५।
सम्प्रदायो महाबोधरूपो गुरुमुखे स्थितः ॥

---

यस्य मातृकामुक्तनिर्वचनाम् (२)कूटत्रयात्मिकां वाग्भवकामराजश(३)क्तित्रयात्मिकां देवीं प्रकाशविमर्शसामरस्यरूपाम् अत एव समष्टिव्यष्टिरूपिणीं (४)(सामरस्याकारेण समष्टिरूपिणीं कूटत्रयात्मना व्यष्टिरूपिणीमिति)।

आद्यां शक्तिं सकलजगदादिभूततयेति पूर्वोक्तक्रमेण भावयन्तो योगिनो भावार्थं मन्वते ॥ २५ ॥

भावार्थमुक्त्वेदानीं सम्प्रदायार्थमाह—सम्प्रदाय इति। सम्यक् (५)याथार्थ्येन कर्णे शिष्यस्य प्रदीयते इति सम्प्रदायः महाबोधरूपः महतो देशकालाकारैरनवच्छिन्नस्य प्रकाशस्य बोधः (६)परिज्ञानं रूपं यस्य तादृशः गुरुमुखे स्थितः

गृणीत तत्त्वमात्मीयमात्मीकृतजगत्त्रयम्।
उपायोपेयरूपाय शिवाय गुरवे नमः ॥

इत्यभियुक्तवचनोक्त(७)रीत्या स्वात्मपरमार्थप्रकटनपरो गुरुः तस्यैव मुखे स्थितः, नान्यस्य अनाकलितागमशास्त्रस्य अनधिगताखिलवेदवेदान्तस्य अनवधारितपरमार्थस्य (८)परप्रतार-

---

(१)'भावार्थ इति' ग०
(२)'कूटत्रयात्मिकां' नास्ति ख०
(३)'शक्तिबीजात्मिकां' ख०
(४)'धनुश्चिन्हान्तर्गतं कपुस्तके नास्ति।
(५)'याथार्थ्येन वकर्णे' क०
(६)'परिज्ञानमस्य रूपं गुरु'ख०
(७)'रीत्या आत्मपरमात्मप्रक' ख०
(८)'परप्रतारण' नास्ति ख०

विश्वाकारप्रथायास्तु महत्त्वञ्च यदाश्रयम् ॥ २६ ॥
शिवशक्त्याद्यया मूलविद्यया परमेश्वरि ! ॥

---

णपरस्य मुखे स्थितः । अत्र प्रमाणवचनम्—

"सर्वज्ञो हि शिवो वेत्ति सदसच्चेष्टितं नृणाम् ।
तेनासौ नानुगृह्णाति किञ्चिज्ज्ञस्य गुरोर्गिरा ॥"(१)इति ।

अत्र गुरोरिति गुरुमानिनः किञ्चिज्ज्ञस्य गुरुत्वाभावात् । (२)विश्वाकारप्रथाया विश्वं शिवादिक्षित्यन्तं षट्त्रिंशत्तत्त्वात्मकं तदाकारप्रथा चिच्छक्तिः । अत्र श्रुतिः—"(३)स ऐक्षत लोकान् सृजते" । तस्या महत्त्वं (४)तदाकारकारित्वं यदाश्रयम् । कोऽर्थः ? पराशिवसामरस्य(५)रूपाया बीजत्रयरूपेण परिण(६)ताया विश्वमयतावासना गुरुमुखेनैव लभ्यत इत्यर्थः ॥ २६ ॥

"विश्वाकारप्रथायास्तु महत्त्वं च यदाश्रयम्" इत्यस्यैवार्थं विवृण्वन्वक्तव्यार्थस्य महत्त्वादत्यन्तसावधानतया श्रोतव्यमित्याह—शिवशक्त्येति । शिवः अकारः, शक्तिर्हकारः, तावाद्यौ हेतुभूतौ यस्याः सा तथाविधया पूर्वोक्तरीत्या (७)प्रथाभूतया

---

(१)'इति' शब्दो नास्ति क०
(२)'विश्वाकारप्रथायाः'नास्ति ख०
(३)'सिसृक्षतो लोकान् सिसृक्षा इति' ख०
(४)'तदाकारत्वं' ख०
(५)'रूपायाः परायाः बीज' ख०
(६)'तायाः चिन्मयता' क०
(७)'एवं भूतया' क०

जगत्कृत्स्नं (१)तया व्याप्तं शृणुष्वात्रहिता प्रिये! २७
पञ्चभूतमयं विश्वं तन्मयी सा (२)सदानघे ! ॥
तन्मयी मूलविद्या च तदद्य कथयामि ते ॥ २८॥

---

मूलविद्यया कृत्स्नं (३)जगदुक्तरूपं व्याप्तं शृणुष्वावहिता अत्यन्तसावधाना शृणुष्व ॥ २७ ॥

(४)विद्याया विश्वव्याप्तिमेव प्रतिजानीते—पञ्चभूतेति । पञ्चभूतमयं विश्वं भूतानि पृथिव्यप्तेजोवाय्वाकाशाः (५)तन्मयं विश्वम् उक्तलक्षणा सा परा सौभाग्यदेवता तन्मयी पञ्चभूतात्मिका । मूलविद्याऽपि (६)तन्मयी तद्वाचिका देवता । वाचिका पञ्चभूतवाचिका च । अत एव (७)तदुभयमयी । तत्प्रकारं कथयामीत्यर्थः । "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी"इत्युपनिषदुक्तरीत्या प्रकाशात्मकात्परमशिवात्पञ्चभूतानामुत्पत्तिः । (८)विश्वात्मिकाया विमर्शशक्तेस्तद्वाचकानां विद्यावर्णानाम् उत्पत्तिरिति (९)हि स्थितिः ॥ २८ ॥

---

(१)'यथा' ग०
(२)'सदातनी' ख० ग०
(३)'जगत् एवंभूतं यया व्याप्तम् उक्तप्रकारेण रूपेणेति । अत एव तास्ववहिता अत्यन्त ख०
(४)'विद्यायां विश्वव्याप्तत्वमेव' ख०
(५)'तन्मयं' नास्ति ख०
(६)'तन्मयी' नास्ति क०
(७)'तदुभयमपि' क०
(८)'विमर्शात्मिकायाः शक्ते' ख०
(९)'हि' नास्ति क०

हकाराद् व्योम सम्भूतं, ककारात्तु प्रभञ्जनः ।

एवं (१)स्थितेऽस्याः किं वाच्यं किं वाचकमिति शङ्कां परिहरन् वर्णभूतसृष्टिप्रतिपादनपुरःसरं विश्वमयतामेवाह—हकारादिति । हकाराद्व्योम (२)सम्भूतं प्रथमं विमर्शशक्तेराकाशवाचको हकारो जातः हकारानन्तरं तद्वाच्यं व्योम प्रकाशात्मनः परमशिवात्सम्भूतम् । पश्चाद्वायुवाचककारो जातः । ककारानन्तरं ककारवाच्यः प्रभञ्जनो जातः । तत्पश्चादग्निवाचको रेफः सञ्जातः । तदनन्तरं रेफवाच्योऽग्निः (३)सञ्जातः । ततो जलतत्त्ववाचकः सकारः (४)सञ्जातः । तदनन्तरं तद्वाच्यजलतत्त्वस्य सम्भवः । तदनन्तरं पृथिवीवाचको लकारो जातः । (५) तदनन्तरं तद्वाच्या पृथिवी जातेत्यर्थः । (६)तस्माच्छिवशक्तिसामरस्यरूपपरावयवप्रकाशविमर्शाभ्यां (७)पञ्चमहाभूतानि तद्वाचकान्यक्षराणि च यस्माज्जातानि तस्मात्तदुभयसामरस्यरूपा सा परा । स्वावयवभूतव(८)र्णमयी विश्वमयीत्यर्थः । तदुक्तं कामकलाविलासे—

(९)स्फुटितादरुणाद्बिन्दोर्नाद(१०)ब्रह्माङ्कुरो रवेर्व्यक्तः ।

---

(१)'एवं स्थितस्य किं वाचकम्' क०
(२)'व्योमपर्यन्तं प्रथमम्' क०
(३)'सम्भूतः पुनर्जलतत्त्व' ख०
(४)'सञ्जातः । सकाराज्जलतत्त्वं सम्भूतं तदनन्तरं पृथिवी' ख
(५)'जातः । लकारात् पृथिवी' ख०
(६)'यस्मात्' ख०
(७)'पञ्चभूतानि पञ्चभूताक्षराणि च जातानि' ख०
(८)'वर्णमयावि' ख०
(९)'स्फुरिता' ख०
(१०)'नादब्रह्माद्वयोऽव्यक्तः' ख०

रेफादग्निः,सकाराच्च जलतत्त्वस्य सम्भवः ॥२९॥
लकारात् पृथिवी जाता, तस्माद् विश्वमयी च सा ।

---

तस्माद्गगनसमीरणदहनोदकभूमिवर्णसम्भूतिः ॥
अथ विशदादपि बिन्दोर्गगनानिलवह्निवारिभू(१)मिसम्भूतिः।
एतत्पञ्चकविकृतिर्जगदिदम (?)एत्राद्यजाण्डपर्यन्तम् ॥
माता मानं मेयं बिन्दुत्रय (२)भिन्नबीजरूपाणि ।
धामत्रयपीठत्रयशक्तित्रयभेदभावितान्यपि च ॥
तेषु क्रमेण लिङ्गत्रितयं तद्वच्च मातृकात्रितयम् ।
इत्थं (३)तृ[त्रि]तयमयी तुरीयपीठादिभेदिनी विद्या ॥

ननु एवंविधक्रमेण विद्यायां वर्णाः कि(४)मिति न स्थिताः ? उच्यते, सत्यम् एवंविधक्रमो (५)न भवति तथापि पूर्वोक्त-सृष्टिस्थितिसंहारा(६)नाख्यावभासनार्थं (७)विद्यायाः क्रमेण वर्णाः पठ्यन्ते । तेन भूतवर्णक्रमो वर्णवासनाक्रमं बाधितुन्नोत्सहते । वासनार्थत्वाद्वर्णानाम् । ननु (८) तर्हि (९)भूत-संख्याकान्यक्षराणि किमिति न भवन्ति अन्यान्यपि ब-

---

(१)'भूमिजनिः' क०
(२)'त्रयविश्वबीज' ख०
(३)'तृतयमायी तुरीया पीठ' क०
(४)'मिति संस्थिताः अत उच्यते' क०
(५)'न' नास्ति ख०
(६)'नाख्यावासनावभा'क०
(७)'विद्यायामक्रमेण' ख०
(८)ननु 'भवतु तर्हि' नास्ति क०
(९)'भूतसंख्ययैवाक्षराणि' ख०

गुणाः पञ्च(१)दश प्रोक्ता भूतानां तन्मयी शिवा ३०॥
यस्य यस्य पदार्थस्य या या शक्तिरुदीरिता ॥
सा सा(२) सर्वेश्वरी देवी स(३)स सर्वो महेश्वरः ३१

---

हूनि (४)श्रूयन्त एवेत्यत आह-गुणा इति । भूतानां पञ्चानां व्याप्यव्यापकभावेन पञ्चदश गुणाः स्युः । अतस्तन्मयी तदात्मिका तत्संख्यावर्णवतीयं विद्या शिवा शोकमोहमयसंसाररूपा मङ्गलपरिपन्थिपरमाद्वैत(५)प्रथापरमार्थरूपा परममङ्गलात्मकत्वात् ॥ ३० ॥

ननु विद्याक्षरसंख्याया यावन्तः परिगणिताः (६)पदार्थाः किं तन्मयता वासना वक्तुं शक्यते (७)इत्यत आह-यस्येति । लोके यस्य यस्य पदार्थस्य यत्किञ्चित्क(८)रणसामर्थ्यलक्षणा या या शक्तिर्विद्यते सा सा शक्तिः सर्वेश्वरी देवी सर्वस्य शिवादि (९)क्षित्यन्तस्येश्वरी (१०)नियामिका देवी परा,स स सर्वः पदार्थः महेश्वरः विश्वजगन्नियामकः परमशिवः । (११)लोके

---

(१)'दश ख्याता' ख० 'दशाख्याता' ग०
(२)'सातु' ग०
(३)'स च' ग०
(४)'श्रयन्त इव' ख०
(५)'प्रथारूपपरममङ्गलार्थत्वात्' ख०
(६)'पदार्थाः' नास्ति ख०
(७)'इत्याह' ख०
(८)'स्य या या शक्तिः किञ्चि' ख०
(९)'क्षित्यन्तस्येयमेवेश्वरी' ख०
(१०)'नियामिका देवी परा' नास्ति ख०
(११)'सर्वलोके' ख०

व्याप्ता पञ्चदशार्णैः सा त्रिधा भूतगुणात्मिका ॥
पञ्चभिश्च तथा षड्भिश्चतुर्भिरपि चाक्षरैः ॥ ३२ ॥

---

यद्यद्वस्तु यत्किञ्चित्करणसामर्थ्यशालि (१)तत्सामर्थ्यरूपेण परैव परिणता(२)तत्सामर्थ्यवद्वस्तुरूपेण परमशिवः परिणत इति वक्तुं शक्यते । (३)क्रमाद्वक्तव्यमेतद् उभय (४)मयवि-द्यावर्णसमानसंख्यावत्पदार्थरूपेण तावेव परिणतावित्यर्थः । तदुक्तमभियुक्तैः—

त्वं चन्द्रिका शशिनि, तिग्मरुचौ रुचिस्त्वं,
त्वञ्चेतनाऽसि पुरुषे, पवने बलं त्वम् ।
त्वं स्वादुताऽसि सलिले, शिखिनि त्वमुष्मा ।
निः (५)सारमम्ब! निखिलं त्वदृते यदि स्यात्॥(६)इति॥३१॥

ननु भूतगुणमयी शिवेत्युक्तं (७)शिवायां तत्संख्या कुत इत्यत आह—व्याप्तेति । सा शिवा (८)परैव विद्या वाच्यवा-चकयो(९)रभेदात्पञ्चभिरक्षरैः वा(१०)ग्बीजस्यावयवैः षड्भि-रक्षरैः कामराजबीजस्यावयवैः चतुर्भिरक्षरैः शक्तिबीजस्या-

---

(१)'तत्तत्साम' क०
(२)'तत्तत्सामर्थ्यवस्तु' क०
(३)'किं वक्तव्यमेत' ख०
(४)'यमपि वि' क०
(५) 'रमेतदाखि' ख०
(६) 'इति' नास्ति क०
(७) 'शिवायास्तत्सं' ख०
(८) 'परैवाम्बिकाया वाच्य' ख०
(९) 'रभेदिनी प' ख०
(१०)'रैर्वाग्भवबीज' क०

स्वरव्यञ्जनभेदेन सप्तत्रिंशत्प्रभेदिनी ॥
सप्तत्रिंशत्प्रभेदेन षट्त्रिंशत्तत्त्वरूपिणी ॥ ३३ ॥
तत्त्वातीतस्वभावा च विद्यैषा भाव्यते सदा ॥

---

वयवैः न क्षरन्तीत्यक्षराणि तेषां (१)नित्यत्वात्स्वांशैः नाशरहितैः पञ्चदशार्णैः व्याप्ता, अत एव (२)भूतगुणात्मिका ॥३२॥

बीजत्रयमक्षरशो विभज्य भूतगुणात्मकतावासनामुक्त्वेदानीमक्षराण्यवयवशो विभज्य षट्त्रिंशत्तत्त्वात्मकतावासनामाह—स्वरव्यञ्जनेति । स्वरव्यञ्जनभेदेन प्रथमबीजे अकारचतुष्टयम् ईकारश्चेति पञ्च स्वराः,शिष्टानि (३)षड् व्यञ्जनानि,एवमेकादश । द्वितीयबीजे अकारपञ्चकमीकारश्चेति षट् स्वराः, शिष्टानि व्यञ्जनानि (४)(सप्त, एवं त्रयोदश । तृतीयबीजे अकारत्रयमीकारश्चेति चत्वारः स्वराः, शिष्टानि व्यञ्जनानि ) पञ्च, एवं नव इत्येवंविभागेन अक्षरावयवाः (५)त्रयस्त्रिंशद्, बीजत्रयान्ते बिन्दवस्त्रय इति (६)षट्त्रिंशत्, तत्समष्टिरेका, एवं सप्तत्रिंशत्प्रभेदिनी विद्या समष्टिरूपा (७)एवं सप्तत्रिंशत्प्रभेदेन षट्त्रिंशत्तत्त्वरूपिणी॥३३॥

तत्त्वातीतस्वभावा च विद्यैषा व्यष्टिसमष्टिभेदेन षट्त्रिंशत्तत्त्वात्मिका तदतीतेयं षट्त्रिंशत्तत्त्वानि अवयवभूतानि तेषां रूपवती सप्तत्रिंशत्प्रभेदेन तत्त्वातीतस्वभावा च स्वस्य भावः

---

(१) 'नित्यत्वात् एवं विद्या स्वांशैः' ख०
(२) 'भूतात्मिका' ख०
(३) 'षड्' नास्ति क०
(४) 'धनुश्चिह्नान्तर्गतं कपुस्तके नास्ति ।
(५) 'विभागत्रय' ख०
(६) 'षट्त्रिंशत् एतत्सम' ख०
(७) 'एतत्प्र' क०

(१)स्वभावः शिवस्य यादृशो भा(२)वस्तादृशोऽस्या इति भावयितव्यमित्यर्थः। तत्त्वानां लक्षणानि मयैव सौभाग्यसुभगोदये निरूपितानि। (३)यथा—

यदयमनुत्तरमूर्तिर्निजेच्छया निखिलमपि जगत्स्रष्टुम्।
प्रस्पन्दे स स्पन्दः प्रथमशिवतत्त्वमुच्यते तज्ज्ञैः॥
इच्छा सैव (४)स्वेच्छा सन्ततसमवा(५)यिनी सती शक्तिः।
सचराचरस्य जगतो बीजं निखिलस्य निजविलीनस्य॥
स्वेच्छाशक्त्युद्गीर्णं जगदा(६)त्माहन्तया समाच्छाद्य।
नित्रसन्स एव निखिलाऽनुग्रहनिरतः सदाशिवोऽभिहितः॥
विश्वं स(७) एव पश्यन्निदंतया निखिलमीश्वरो जातः।
सा(८)भाति शुद्धविद्या ये(९)दन्ताहन्तयोरभेदमतिः॥
माया विभेदबुद्धिर्नि(१०)जांशभूतेषु निखिल(११)भूतेषु।
नित्यन्तस्य निरङ्कुशविभवं वेलेव वा(१२)रिधिं रुन्धे॥

---

(१) 'स्वभावः' नास्ति क०

(२) भावस्तादृशमस्याः स्वभाव इति भावितव्य' ख०

(३) शिवशक्तिसदाशिवेश्वरशुद्धविद्यामायाकालनियतिकलारागविद्यापुरुषप्रकृतिमहदहङ्कृतिमनोदशेन्द्रियपञ्चतन्मात्रपञ्चमहाभूतानि तत्त्वानि। इति ग्रन्थो 'यथा' इत्यस्याग्रे ख पुस्तके टिप्पण्यां वर्तते। अत्रत्यः क्रमश्चिन्त्यः।

(४) 'स्वच्छा' ख०

(५) 'वायिनियक्तिः' क०

(६) 'जगदात्मतया' ख०

(७) 'विश्वं पश्चात्पश्यन्' ख०

(८) 'भवति' ख०

(९) 'इदन्ता' क०

(१०) 'निजांशजातेषु' ख०

(११) 'लजीवेषु' ख०

(१२) 'वारिधे' ख०

स तथा परिमितमूर्त्तिः सङ्कुचितसमस्तशक्तिरेष पुमान्।
रविरिव सन्ध्यारक्तः संहृतरश्मिः स्वभासनेऽथ पटुः॥
सम्पूर्णकर्तृताद्या या(१)वन्त्यः सन्ति शक्तयस्तस्य।
सङ्कोचात्सङ्कुचिताः कलादिरूपेण रूढयन्त्येनम्॥
तत्सर्वकर्तृता सा सङ्कुचिता कतिपयार्थमात्रपरा।
किञ्चित्कर्तारममुं कलयन्ती कीर्त्यते कलाना(२)म्ना॥
सर्वज्ञताऽस्य शक्तिः परिमित(३)तनुरल्पवेद्यमात्रपरा।
ज्ञानमुप(४)पादयन्ती विद्येति निगद्यते बुधैराद्यैः॥
नित्यपरिपूर्णतृप्तिः शक्तिस्तस्यैव परिमिता तु(५) सती।
भोगेषु (६)रञ्जयन्ती सततममुं रागतत्त्वतां याता॥
सा नित्यताऽस्य (७)शक्तिर्निकृष्यानिधनोदयप्रदानेन।
नियतपरिच्छेदकरी क्लृप्ता स्यात्कालतत्त्वरूपेण॥
याऽस्य स्वतन्त्रताख्या शक्तिः सङ्कोचशालिनी सैव॥
कृत्याकृत्येष्ववशं नियतममुं नियमयन्त्यभून्नियतिः।
इच्छादीत्रि(८)समष्टिशक्तिः शान्ताऽस्य सङ्कुचद्रूपा।
(९)सङ्कुचितेच्छाद्यात्मकसत्त्वादिकसाम्यरूपिणी तु(१०)सती॥

---

(१) 'यावन्त्यः सन्त्यस्य शक्त' क०
(२) 'नाम' ख०
(३) 'वपु' ख०
(४) 'मुत्पाद' ख०
(५) 'तु' नास्ति क०
(६) 'रञ्जयति' क०
(७) 'शक्तिप्रकृष्य' क०
(८) 'समष्टिः' ख०
(९) 'सङ्कलिते' ख०
(१०) 'तु' नास्ति क०

बुद्ध्यादिसामरस्य(१)रूपा चित्तात्मिका मता प्रकृतिः।
इच्छाऽस्य रजोरूपाऽहङ्कृतिरासीदहम्प्रतीतिकरी ॥
(२)ज्ञानमपि सत्त्वरूपा निर्णयबोधस्य कारणम्बुद्धिः।
तस्य क्रिया तमोमयमूर्तिर्मन इत्युच्यते विकल्पकरी ॥
वागादिपञ्च(३)भेदैः स एव सङ्कुचितविग्रहो देवः।
ज्ञानक्रियोपरागप्राधान्याद्द्विविध(४)विषयरूपोऽभूत् ॥
श्रोत्रं चक्षुः स्पर्शनजिह्वाघ्राणानि बोधकरणानि।
वाक्पाणिपादपायूप(५)स्थाख्याकानि कर्मकरणानि ॥
शब्दस्पर्शौ रूपं रसगन्धौ चेति भूतसूक्ष्माणि।
अयमेवातिनिकृष्टो जातो भूतात्मनाऽपि भूतेशः ॥
गगनमनिलश्च तेजः सलिलं भूमिश्च पञ्च भूतानि।
श्रोत्रादिकरणवेद्याः शब्दाद्यास्तानि वेदकान्येषाम् ॥
वचनकरी वागासीत्पाणिः स्यात्करणभूतमादाने।
गमनविसर्गानन्दत्रितये (६)पादादित्रिकं करणम् ॥
गन्धवती भूमिः स्यादापः सांसिद्धिकद्रवास्तेजः।
(७)उष्णस्पर्शमरूपस्पर्शो वायुरम्बरं शब्दः ॥ इति।
पुनरपि सिंहावलोकनन्यायेन भूतगुणानां पञ्चद(८)शतां

---

(१) 'रस्यस्वरूपचिन्तात्मिका' ख०

(२) 'ज्ञानाऽपि' ख०

(३) 'भेदैः' क०

(४) 'विषयिरू' ख०

(५) 'स्थाकनामानि' ख०

(६) 'पादादिकं' ख०

(७) 'उष्णस्पर्शरूपं सुस्पर्शो वायुस्त्वपरं शब्दः' क०

(८) 'दशार्णवि' क०

पृथिव्यादिषु भूतेषु व्यापकं चोत्तरोत्तरम् ॥ ३४ ॥
भूतं त्व(१)धस्तनं व्याप्यं, तद्गुणा व्यापकाश्रयाः॥
व्याप्येष्ववस्थिता देवि! स्थूलसूक्ष्मविभेदतः ॥ ३५ ॥

---

विद्यायाश्च तन्मयरूपतां विवृणोति—पृथिव्यादिष्विति। पृथिव्यादिषु। आदिशब्देनाप्तेजोवाय्वाकाशा गृह्यन्ते। (२)तेष्वुत्तरोत्तरं व्यापकमधिकवृत्ति (३)अधस्तनं भूतं व्याप्यं न्यूनवृत्ति। कोऽर्थः ? आ(४)काशमधस्तनानां भूतानां व्यापकम् अधिकवृत्तित्वादन्यान्यपि चत्वारि भूतानि व्याप्यानि न्यूनवृत्तित्वात्। एवं वायुरग्न्यादीनां त्रयाणां व्यापकः, तानि त्रीणि व्याप्यानि। एवन्तेजः अधस्तनभूतयोर्व्यापकं, ते द्वे व्याप्ये। एवमापः पृथिव्या व्यापिकाः, पृथिवी व्याप्येत्यर्थः। तेन व्यापकगुणाः (५)व्याप्ये स्थिता इत्याह—तद्गुणा इति। व्यापकाश्रयस्तद्गुणाः (६)व्यापकगुणा व्याप्येष्ववस्थिताः स्थूलसूक्ष्मविभेदतः। स्थूलम् अधिकवृत्ति व्यापकं, सूक्ष्ममल्पवृत्ति व्याप्यं, व्यापकव्याप्ययोः स्थूलसूक्ष्मविभेदाद्व्यापकगुणाः व्याप्येषु तिष्ठन्तीत्यर्थः॥ ३४ ॥ ३५ ॥

ननु (७)कस्य कस्य भूतस्य गुणाः केषु केषु भूतेषु स्थि-

---

(१) 'त्वधस्तरं' क०
(२) 'गृह्यन्ते। पृथिव्यादिषु भूतेषु उत्तरं भूतं व्या' ख०
(३) 'अधस्तरं व्याप्यं' क०
(४) 'आकाशः स्वाध' क०
(५) 'व्याप्येष्वर्थेषु' ख०
(६) 'व्यापकगुणाः' नास्ति क०
(७) 'कस्य' इत्येकं कपुस्तके नास्ति।

तस्माद्व्योमगुणः शब्दो वाय्वादीन् व्याप्य संस्थितः ॥
व्योमबीजैस्तु विद्यास्थैर्लक्षयेच्छब्दपञ्चकम् ॥३६॥
तेषां कारणरूपेण स्थितं ध्वनिमयं परम् ॥

---

ता: (१)विद्यायाः कानि कान्यक्षराणि (२)कस्य कस्य भूतस्य गुणान् लक्षयन्तीत्यत आह—तस्मादिति । तस्माद् व्योम्नः स्वे(३)तरभूतेभ्यः स्थूलत्वाद् व्यापकत्वं, तेन व्योमगुणः शब्दो वाय्वादीन् वायुतेजःसलिलपृथिव्यात्मकान् व्याप्य स्थितः विद्यास्थैर्व्योमबीजैः पञ्चभिः पञ्चभूतेषु स्थितानां शब्दानां पञ्चकं लक्षयेत् । व्योमवाचकत्वाद्धकारपञ्चकं तद्गुणं शब्दपञ्चकं लक्षयतीत्यर्थः ॥ ३६ ॥

ननु विद्यायां षड्ढका(४)राः सन्ति अन्यस्य हकारस्य किम्प्रयोजनमित्यत आह—तेषामिति । तेषां शब्दानां कारणरूपेण स्थितः कारणात्मना स्थितो ध्वनिर्नादः शब्दानां कारणम् । तदुक्तमभियुक्तैः—

पिण्डो वाचकविस्तरस्य (५)महतः संस्कारशे(६)षस्थितिर्नादोऽसौ तव देवि ! मूर्ध्नि समनासीमानमुल्लङ्घयन् ।
( घ(७)ण्टाक्वाण इव क्रमेण विरमन्नन्यामणीयस्तरीमाजिघ्रन परचिद्दशामनुभवन् मूर्तिं पुराणीं मम ॥ इति । )

---

( १ ) 'विद्यायां' ख०
( २ ) 'कस्य कस्य भूतस्य गुणान्' नास्ति ख०
( ३ ) 'स्वतरेभ्यः' ख०
( ४ ) 'कारा निवसन्ति' ख०
( ५ ) 'महतः' नास्ति क०
( ६ ) 'दोषास्थिति' ख०
( ७ ) धनुश्चिन्हान्तर्गतं कपुस्तके नास्ति ।

भवेद् गुणवतां बीजं गुणानामपि वाचकम् ॥३७॥

---

तन्मयं (१)तल्लक्षकत्वात् । परं कामराजबीजस्थितककारलकारमध्यगतहकाराक्षरम् । कोऽर्थः ? कामराजमध्यस्थितः षष्ठो हकार आकाशादिपञ्चभूतगतशब्दपञ्चककारणनादरूपः कामराजबीज(२)स्थितस्य स्थितिरूपतां (३) लक्षयतीत्यर्थः । ननु हकारादिवर्णा आकाशादिभूतवाचका इत्युक्तं कथं शब्दादि(४)पञ्चभूतगुणानामपि वाचका इत्युच्यन्त इत्यत आह—भवेदिति। गुणवतां गुणाः शब्दादयः पञ्च तद्वतामाकाशादीनां पञ्चभूतानां बीजम् । जातावेकवचनम् । अत्र विद्यायां हकारादीनि पञ्चभूताक्षराणि व्यञ्जनानि । अत्रैवोक्तं "हकाराद्व्योम संभूतम्" ( यो० हृ० सं० २ श्लो० २९) इत्यादिना। अतो बीजान्युच्यन्ते । ककारादिक्षकारान्तानां व्यञ्जनानां बीजत्वमुक्तं चिद्गगनचन्द्रिकायाम्—

षण्ढवर्जमहिमद्युतेः(५)कलाः
बिन्दुसर्गरहिताश्च ये शुचेः ।
सर्व एव शशिनः (६)कलाः शिवे
योनयो विधृतबी(७)जतः स्वराः ॥

परापञ्चाशिकायामप्युक्तम्—

---

(१) 'तल्लक्ष्यत्वात्' ख०
(२) 'स्थितस्य' नास्ति ख०
(३) 'तां च लक्ष' क०
(४) 'पञ्चदश गुणा' क०
(५) 'द्युतेस्स्वराः सर्गबिन्दुरहि' क०
(६) 'कलाश्च ये योन' ख०
(७) 'बीजकांस्तदा इति' ख०

कार्यकारणभावेन तयोरैक्यं विवक्षया ॥

द्विधेयं मातृका देवी बीजयोन्यात्मना स्थिता । इति(१) । तानि तद्गुणानां शब्दादीनां वा (२)चकं लक्षकाणि हकाराद्यक्षराणि आकाशाद्यर्थेषु सङ्केतितत्वात्तद्गुणेषु शब्दादिषु (३)लक्षकाण्येव । तदुक्तमभियुक्तैः—

साक्षात्सङ्के(४)तितं योऽर्थमभिधत्ते स वाचकम् ।(५) इति ।

कोऽर्थः ? शब्दादिगुणवतामाकाशादिभूतानां यानि बीजानि वाचकानि (६)हकारादीनि तानि तद्गुणानां शब्दादीनां (७)लक्षकाणीत्युक्तम् ॥ ३७ ॥

लक्षणायां निमित्तमाह—कार्यकारणेति । तयोर्गुण-(८)गुणिनोः कार्यकारणभावेन । गुणी कारणं, गुणः कार्यम् । अतः कार्यकारणभावेन एक(९)त्वविवक्षया विवक्षितमेवैकत्वं न तु तात्त्विकं, गुणगुणिनोः कार्य(१०)कारणभावादेकत्वमारोप्य (११)तत्सम्बन्धन्निमित्तीकृत्य लक्षणया गुणिशब्दा गुणेषु यो(१२) ज्यन्ते । तदुक्तं महास्वच्छन्दसङ्ग्रहे—

(१) 'इति' नास्ति क०
(२) 'वाचकानि' ख०
(३) 'लक्षणान्ये' क०
(४) 'तितो योऽर्थ अ' क०
(५) 'इति' नास्ति क०
(६) 'हकारादीनि' नास्ति ख०
(७) 'लक्षणानीत्यर्थः' क०
(८) 'गुणिनोः गुणिनः कार्यकारणगुणाः अतः' ख०
(९) 'एकत्वं विवक्षितं न तु' ख०
(१०) 'कारणत्वभावा' क०
(११) 'तदेवसम्बन्ध' क०
(१२) 'योज्या इत्यर्थः' ख०

(१)शब्दः शान्तत्वघोरत्वविशेषापन्नरूपकः।
शब्दस्तु शब्दतन्मात्रं, (२)मृदूष्णकठिनश्चलः॥
विशिष्टस्पर्शरूपश्च स्पर्शतन्मात्रसंज्ञितः।
नीलपीतत्वशुक्लत्वाविशिष्टं रूपमेव च॥
रूपतन्मात्रमित्युक्तं, म(३)धुरत्वादिसंयुतम्।
रसतन्मात्रसंज्ञं तु, सौरभ्यादि(४)विशेषितः॥
गन्धः स्याद्गन्धतन्मात्रं, तेभ्यो वै भूतपञ्चकम्।
आकाशः शब्दतन्मात्रं नित्यं शब्दगुणं महत्॥
व्यापकं निर्मलं तत्त्वमवकाशप्रदानकम्।
स्पर्शतन्मात्रतो वा(५)युश्चलद्रूपोऽनिलोऽभवत्॥
(६)जगत्प्राणोऽनिलो व्यूहप्रेरणं च लघुर्भवेत्।
शब्दस्पर्शगुणः प्रोक्तो गमागमनकर्मकृत्॥
शब्द (७)स्पर्शरूपगुणं तेजस्तत्त्वन्तु भास्वरम्।
रूपतन्मात्रकार्यं च पाककर्मकरं शिवे!॥
रसतन्मात्रतो जातं वारितत्त्वं द्रवात्मकम्।
शब्दस्पर्शरूपरसगुणसंग्रहकर्मकृत्॥
शब्दस्पर्शरूपरसगन्धपञ्च (८)गुणान्वितम्।
पृथिवीतत्त्वमाख्यातं (९)कठिनं सर्वधारणम्॥

---

(१) 'शब्दः सान्तद्वयोरर्थविशेषोऽयं न रूपकः' ख०
(२) 'मृदूष्णकठिनश्चलः' ख०
(३) मधुरत्वोष्णसं' ख०
(४) 'विशेषतः' क०
(५) 'वायुश्चिद्रूपो नभसोऽभवत्' क०
(६) 'एष प्राणोऽलघुर्व्यूहप्रेरणश्च' क०
(७) 'शब्दः स्पर्शो रूपगुणौ' क०
(८) 'गुणात्मकम्' ख०
(९) 'कथितं' ख०

महामायात्रयेणापि कारणेन च बिन्दुना ॥ ३८ ॥
वाय्वग्निजल(१)भूमीनां स्पर्शानां च चतुष्टयम् ॥

---

पृथ्व्यादिव्योमतत्त्वान्तपञ्चकं पूर्वपूर्वकम् ।
(२)कार्यं सृष्ट्या समावृत्य वर्तते पञ्चकं क्रमात् ॥ इति ।
(३)( एवमन्यत्रापि—
समष्टिबिन्दुना वायुः स्थूलसूक्ष्मविभेदतः ।

पूर्वं विद्यास्थहकारपञ्चकस्य पञ्चभूतस्थितशब्द(४)पञ्चकं पूर्वं कथयित्वेदानीं वाय्वादिभूतचतुष्टयगतं स्पर्शचतुष्टयं (५)वायुवाचकबीजैर्लक्षयति-महामायेति । महामायाः ईकाराः (६)तेषां क्रमेण बीजत्रयशिखरवर्तिनामीकाराणां बिन्दुद्वयहार्धमात्रामयानां (७)त्रयाणां कारणेन च बिन्दुना तदक्षर (८)त्रयकारणेन अकारहकारसामरस्यरूपेण कामाख्येनोर्ध्वबिन्दुना वाय्वग्निजलभू (९)मिष्ठानां स्पर्शानां (१०)चतुष्टयमुत्पन्नं लक्ष्यं भावयेत् । स्थूलसूक्ष्मविभेदतः सूक्ष्माणि पृथिव्यप्तेजांसि, स्थूलः वायुः

---

( १ ) 'भूमिषु स्पर्शनानां चतु' क०
(२) 'कार्यदृष्ट्यासमावर्त्या' क०
(३) 'धनुश्चिह्नान्तर्गतं खपुस्तके नास्ति ।
( ४ ) 'पञ्चकलक्षकतामुक्त्वा इदानीं वायुवाचकैरक्षरैस्तद्गुणस्पर्श' ख०
( ५ ) 'वायुवाचकबीजैः' नास्ति. ख०
( ६ ) 'तेषां त्रयं त्रिबीजशिखर' ख०
( ७ ) 'त्रयकारणेन' ख०
( ८ ) 'त्रय' नास्ति ख०
( ९ ) 'भूमीनां' ख०
(१०) 'चतुष्टयं भाव' क०

उत्पन्नं(१)भावयेद् देवि! स्थूलसूक्ष्मविभेदतः॥३९॥
रूपाणां त्रितयं तद्वत् त्रिभीरेफैर्विभावितम् ॥
प्रधानं तेजसो रूपं तद्बीजेन हि जन्यते ॥ ४० ॥

---

अर्वाचीनेभ्यः। अत एव (२)एवंविधेन ईकारत्रयेणापि लक्षिताः बिन्दवः (३)षट्सङ्ख्याकाः। कारणं बिन्दुः समष्टिवृत्तं हि षड्बिन्दुलाञ्छितवृत्तात्मकत्वात् वायुमण्डलस्य। तदुक्तमभियुक्तैः- "कण्ठादितालुपर्यन्तं वृत्तं षड्बिन्दुलाञ्छितम्। धूम्रम्" इति। तद्वायुमण्डलवाचकेन ईकारत्रयेण समष्टिबिन्दुना च स्थूलसूक्ष्मविभेदतः वाय्वादि (४)भूतचतुष्टयस्थितं स्पर्शचतुष्टयं (५)लक्षयेदित्यर्थः ॥ ३८ ॥ ३९ ॥

(६)वाय्वादिचक्रवलयेन वायुगुणं स्पर्शचतुष्टयं लक्षयित्वा इदानीं तेजोवाचकैरक्षरैस्तद्गुणं रूपत्रयं च लक्षयति—रूपाणामिति। रूपाणां त्रितयं वह्निवारिभूमिष्ठानां रूपाणां त्रितयं त्रिभी रेफैर्विभावितं लक्षितम्।

ननु (७)रूपं पृथिव्यप्तेजसां साधारणं कथं तेजोबीजेन रेफेण लक्षितमित्यत आह—प्रधानमिति। ननु (८)सत्यं त्रिष्वपि भूतेषु विद्यते रूपं, तथापि वाय्वाकाशयोरभावात्प्रथमं ते-

---

(१) 'उत्पन्नं तदेतत्स्थूल' क०
(२) 'एवंविध ईकारत्रयेण बिन्दवः' क०
(३) 'षट् सन्ति कारणं' ख०
(४) 'भूत' नास्ति ख०
(५) 'च लक्ष' क०
(६) 'वायुवाचकैः वायुगुणं' ख०
(७) 'रूपं' नास्ति क०
(८) 'सत्यं' नास्ति ख०

त्रिद्यास्थैश्चन्द्रबीजैस्तु (१)स्थूलसूक्ष्मो रसः स्मृतः ॥
सम्बन्धो विदितो लोके रसस्याप्यमृतस्य च ॥४१॥

---

जस (२)एव रूपं प्रधानम् । पश्चादितरयोर्भूतयोस्तद्बीजेन रेफेण जन्यते(३)प्रकाश्यते । जननं प्रादुर्भावः ॥ ४० ॥

पूर्वं तेजोवाचकैरक्षरैस्तेजोगुणं रूपत्रयं लक्षयित्वेदानीमब्वाचकैरक्षरैस्तद्गुणं रसद्वयं (४)लक्षयति–विद्यास्थैरिति । (५)विद्याबीजस्थैश्चन्द्रबीजैः सकारैः । अभिधानमात्रमेतत् । तदुक्तमभियुक्तैः—

व्योमेन्दुवह्न्यधरबिन्दुभिरेकमन्यत्
(६)शाक्ताच्छिवेन्दुशिखिभिः सरमार्यचन्द्रैः ॥
अन्यद्युशीतकरपावकमन्त्यमन्त्यै-
र्बीजैरमीभिरुदिता त्रिपुरेति विद्या ॥

(७)स्थूलसूक्ष्मः, स्थूलो रसः अप्तत्त्वगतो व्यापकत्वात्, सूक्ष्मरसो भूतत्वगतो व्याप्यत्वात्स्मृतो भावितः । स्मृतिर्हि भावना ।

ननु (८)विद्यायां सकारत्रयमस्ति अप्पृथिव्योस्तु रसद्वयमेवेतरेण सकारेण किमुच्यत इत्यत आह–सम्बन्ध इति । अमृतस्य सुधाया रसस्यापि सम्बन्धो लोके विदितः–सुरासुरैरपान्नि-

---

(१) 'स्थूलः सूक्ष्मो' ख०ग०
(२) 'तेजसो रूपं' ख०
(३) 'प्रकाश्यते । जननं प्रादुर्भावः, नास्ति ख०
(४) 'च लक्ष' क०
(५) 'विद्या बीजस्थैः'नास्ति ख०
(६) 'धनुश्चिन्हान्तर्गतं खपुस्तके नास्ति ।
(७) 'स्थूलः सूक्ष्मः' ख०
(८) 'विद्यायामस्यां' ख०

वसु(१) धाया गुणो गन्धस्तल्लिपिर्गन्धवाचिका ॥
भुवनत्रयसम्बन्धात् त्रिधात्वन्तु महेश्वरि ! ॥४२॥

---

धौ मथ्यमाने तत्सारभूतममृतं (२)समुदितमिति पुराणप्रसि-(३)द्ध्या लोके विदितः परि (४)ज्ञातः । अत्राप्त्त्वसारभूतत्वात्तद्गुणो रसः तृतीयसकारेण लक्ष्यते । कोऽर्थः? अप्त्वं स्थूलम्, अमृतं तत्सारभूतं सूक्ष्मं, तद्व्याप्या पृथिवी च सूक्ष्मा, तेन सलिलामृत(५)पृथिव्यन्तरे त्रिधा स्थितो रसः विद्यास्थैस्त्रिभिः सकारैर्लक्ष्यत इत्यर्थः ॥ ४१ ॥

पूर्वमब्वाचकैरक्षरैरब्गुणं रसत्रयं लक्षयित्वा इदानीं पृथिवीवाचकैर्वर्णैः पृथिवीगुणं गन्धं लक्षयति—वसुधाया इति । (६)वसुधायाः पृथिव्याः गुणो गन्धः, तल्लिपिः पृथिवी (७)वाचकवर्णोऽपि लकारः गन्धवाचिका (८)गन्धस्य परिभाषणकरी।

ननु त्रिद्यायां लकारत्रयमस्ति तत्रैकलकारेण पृथिवी-(९)संस्थितो गुणो गन्धो लक्षितः । शिष्टाभ्यां (१०)लकाराभ्यां किं क्रियत इत्यत आह—भुवनत्रयेति । भुवनत्रयं लोकत्रयं,

---

(१) 'वसुन्धरागुणो' ख०ग०
(२) 'समुदितं' नास्ति ख०
(३) 'प्रसिद्धं' ख०
(४) 'ज्ञातम् । अतोऽमृतस्य सार' ख०
(५) 'पृथिव्यन्तरस्थितो' ख०
(६) 'वसुन्धरायाः' ख०
(७) 'वाचकोऽपि वर्णो' क०
(८) 'गन्धस्य परिभाषणकरी' नास्ति ख०
(९) 'संस्थितो' नास्ति ख०
(१०) 'लकाराभ्यां' नास्ति ख०

अशुद्धशुद्धमिश्राणां प्रमातॄणां परं वपुः ॥

---

तत्सम्बन्धाल्लोकत्रयाधारत्वादाधाराधेय(१)भावः सम्बन्धः, तस्मात्सम्बन्धाद्धेतोः पृथिव्यास्त्रि (२)धात्वं, तेन पृथिवी (३)भागत्रयाल्लोकत्रयगतगन्धत्रयलक्षकं लकारत्रयमित्यर्थः ॥ ४२ ॥

हकाराद्व्योम सम्भूतं (४)ककाराच्च प्रभञ्जनः ।
( यो० हृ० सं० २ श्लो० २९ )

(५)इत्यत्र वायुवाचकतयो(६)क्तस्य ककारस्य प्रमातृवाचकत्वेनापि वक्तव्यांशकत्वादन्यै(७)रक्षरैरेव स्पर्शचतुष्टयं लक्षयित्वा इदानीं ककारत्रयेण प्रमातृत्रयं लक्षयति—अशुद्धेति । अशुद्धाः प्रमातरः भेद (८)धीमात्रसाराः शिवाहम्भावभावनाविहीनाः सकलाः पशवः । तदुक्तं स्वच्छन्दसंग्रहे—

पशवस्त्रिप्रकाराः स्युस्तेष्वेके सकला मताः ।
प्रलयाकलनामानस्तेषां केचिन्महेश्वरि ! ॥
विज्ञानकेवलास्त्वन्ये तेषां रूपं क्रमाच्छृणु ।
अनादिमल (९)सम्पन्नो मायाकर्मावृतो विभुः ॥

---

( १ ) 'भावः' नास्ति ख०
( २ ) 'त्रित्वं' ख०
( ३ ) 'भागत्रयगत' ख०
( ४ ) 'ककारात्तु' ख०
( ५ ) 'इत्येवं' ख०
( ६ ) 'तयोक्तस्यापि' ख०
( ७ ) 'रक्षरैः स्पर्श' ख०
( ८ ) 'धी' नास्ति ख०
( ९ ) 'सञ्छन्नो' ख०

शरीरी (१)शिवतत्त्वाज्ञो भेदैकरसिको लघुः ।
सर्वदा कर्मकर्ता च स्वकर्मफलभोजकः ॥
नित्यं विषय(२)संसक्तो बोध्यः शोध्यः पुमानयम् ।

शुद्धाः प्रमातरः पक्कमलाविज्ञानाः शिवत(३)न्मात्रसाराः (४)विज्ञानकेवलाः पशवः । तदुक्तं (५)स्वच्छन्दसङ्ग्रहे—

मलमात्रेण (६)सम्बद्धः पशुर्विज्ञानकेवलः ।
सुपक्कमलविज्ञानके(७)वलश्च स्वयं प्रिये ! ॥
(८)सुतीव्रशक्तिपातेन कुरुते (९)तान् स केवलान् ।

मिश्राः प्रमातरः पुर्यष्टकसूक्ष्मशरीरमात्र(१०)सम्बन्धाः प्रारब्धकर्मानुभवार्थमनेकयोनिषु संभूय तत्तत्कर्म(११)फलानुभवेन कर्मद्वयसाम्ये सति सुपक्कमलकर्माणो गुरुं (१२)विनाऽपि शिवानुग्रहशालिनः क्रियाज्ञानसाधारणाः प्रलयाकलाः पशवः । तदुक्तं स्वच्छन्दसंग्रहे—

मिश्राः प्रमातृरूपाः स्युः प्रलयाकलसंज्ञकाः ।

---

(१) 'स्वशिवत्वाज्ञो' क०
(२) 'संरक्तो भाव्यः साध्यः' ख०
(३) 'शिवतावन्मात्र' क०
(४) 'वि' नास्ति ख०
(५) 'महास्वच्छन्द' ख०
(६) 'सम्बन्धः' क० खपुस्तके च 'निर्मुक्तः' इति पाठभेदोऽपि दृश्यते ।
(७) 'केवलः स स्वयं' ख०
(८) 'स्वतीव्र' ख०
(९) 'तांश्च केवलाम्' ख०
(१०) 'सम्बद्धाः प्राक् स्वस्वकर्मा' ख०
(११) 'फल' शब्दो नास्ति ख०
(१२) 'विना' ख०

क्रोधीशत्रितये(१)नाथ विद्यास्थेन प्रकाश्यते ॥४३॥

पुर्यष्टकशरीराश्च (२)स्वस्वकर्मवशात्प्रिये ! ॥
सर्वयोनिषु (३)सम्भूय भोगार्थं स्वस्वकर्मणाम् ।
भुक्त्वा भोगानि तेषान्तु कर्मसाम्ये शिवः स्वयम् ॥
सुपक्वमलकर्माण(४)स्तान्केचिदनुगृह्य च ।
जलतत्त्वादितत्त्वानां मध्ये लोकेश्वरास्त्रिधा ॥ (५)इति ।

तेषां (६)त्रिविधानां प्रमातॄणां (७)परं वपुः स्वरूपं परमन्यत् । क्रोधीशात्रितयेनेति । अनेन श्रीकण्ठन्या(८)सपरिपाट्या क्रो(९)धीशाः ककाराः तेषां त्रितयेन विद्यास्थेन बीजत्रितयस्थेन प्रकाश्यते व्यज्यते । कोऽर्थः ? बीजत्रितयगतककारत्रयेण सकल-विज्ञानकेवल-(१०)प्रलयाकलारूपत्रिविधपशुरूपाऽशुद्धशुद्धमिश्रप्रमातृत्रितयस्वरूपं व्यज्यत इत्यर्थः ॥ ४३ ॥

पूर्वं विद्यास्थक्रोधीशत्रितयेन प्रमातृत्रयं लक्षयित्वा इदानीं विद्यास्थश्रीकण्ठद्वादशमध्ये आद्यदशकेन अव्यक्तमनन्तरेण प्राणं (११)चरमेणेशं च लक्षयति—श्रीकण्ठेति । श्रीकण्ठदशकं हल्ले-

(१) 'नास्य' ख०ग०
(२) 'पृथुकर्म' ख०
(३) 'संप्राप्य भोगाद्यं' ख०
(४) 'स्तान् किञ्चि' ख०
(५) 'इति' नास्ति क०
(६) 'एतेषां' ख०
(७) 'परं' नास्ति ख०
(८) 'न्याय' क०
(९) 'क्रोधीशः ककारः' ख०
(१०) 'प्रलयकला' क०
(११) 'प्राणं रमेशं च' क०

श्रीकण्ठदशकं तद्वद(१)व्यक्तस्यापि वाचकः ॥

खात्रयवर्जितहकारादिद्वादशाक्षरोपरिगतानामकाराणां मध्ये (२)श्रीकण्ठदशकम् अकारदशकम्, अव्यक्तः जीवः (३)करणेन्द्रियसञ्छन्नतया स्वशिवत्वं जडवर्गान्तःपातितया (४)च केवलचिन्मात्र(५)तया न मन्येत अनादिमलसञ्छन्नतया स्वाशिवत्वापरिज्ञानात्। तदुक्तं स्वच्छन्दसंग्रहे—

अनादिमलसंछन्नो मायाकर्मावृतो विभुः।
(६)शरीरी शिवतत्त्वाज्ञो भेदैकरसिको लघुः ॥

तस्य (७)वाचकः।

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः।

इति सङ्केतपद्धत्युक्तरीत्या अकारवाच्यः (८)परमाशिवः परमाशिवांशत्वात् (९)तद्वत् पराशिववत्। यथा परमाशिवोऽकारवाच्यः तथा तदंशभूतो (१०)जीवोऽपि अकारदशकेनोच्यत इत्यर्थः। तद्वत् (११)जीववत् यथा शिवांशो जीवः परमाशिववा-

---

(१) 'दव्यक्तस्य हि वाचकम्' ख०ग०

(२) 'श्रीकण्ठदशकं श्रीकण्ठा अकाराः, तेषां दशकम्। अव्यक्तः' ख०

(३) 'अनादिमलसञ्छन्नतया स्वाशिवत्वापरिज्ञानकारणेन्द्रियादिजड' ख०

(४) 'च' नास्ति ख०

(५) 'तया न्यस्तः। तदुक्तम् अनादि' इत्येव खपुस्तके।

(६) 'शरीरी स्वशिवत्वाज्ञो' क०

(७) 'वाचकम्' ख०

(८) 'पराशिवः पराशिव' ख०

(९) 'तद्वत् पराशिववत्' नास्ति क०

(१०) 'जीवोऽकारेणोच्यते' ख०

(११) 'तद्वत् जीववत्' नास्ति क०

प्राण(१)रूपास्थितो देवि तद्वदेकादशः परः ॥४४॥
एकः सन्नेव पुरुषो बहुधा जायते हि सः ॥

चक्रश्रीकण्ठेन लक्ष्यते तद्वत् जीववदेका (२)दशश्च श्रीकण्ठो जीवाधारभूतप्राणरूपः (३)स्थितः । प्राणो (४)हि जीवस्याधारः प्राणेन विना जीवस्यानवस्थानात् । परः परो द्वादशश्रीकण्ठः (५)पुरुषः पुरुषस्य वाचकः विश्वस्य पूरणात्परमशिवः (६)पुरुषः । तदुक्तं चिद्गगनचन्द्रिकायाम्—

विश्वसद्मनि (७)चिदात्मनीश्वरे
पूरणात्पुरुषतामुपेयुषि ।
ये मनः प्रणिदधुर्महर्षय-
(८)( स्तानपतञ्जलिमुखानुपास्महे ॥ ) इति ।

(९)श्रुतिरपि—"पुरुष एवेदं सर्वम्" (१०)इति ॥ ४४ ॥

ननु (११)श्रीकण्ठद्वादशकं विद्यायां विद्यते एकेन शिवः कथ्यते, एकेन जीवः, एकेन प्राण इति त्रिभिरेवालं किमन्यैरित्यत आह—एक इति। सत्यमेकेन (१२)शिव उच्यते, द्वाभ्या-

(१) 'प्राणभूत' ख० ग०
(२) 'दशश्रीकण्ठेन' क०
(३) 'प्राणस्य निरूपितः स्थितः' क०
(४) 'हि' नास्ति ख०
[५] 'पुरुषः' नास्ति ख०
[६] 'पुरुषः'नास्ति ख०
(७) 'शिवात्म' ख०
(८) 'धनुश्चिन्हान्तर्गतं नास्ति क०
[९] 'श्रुतिरपि' नास्ति ख०
[१०] 'इति श्रुतेः' ख०
[११] 'श्रीकिण्ठकद्वादशकण्ठविद्यायां' क०
[१२] 'पुरुषः कथ्यते' ख०

रुद्रेश्वरसदेशाख्या देवता मितविग्रहाः ॥ ४५ ॥

---

जीवप्राणौ; तथापि स एकः सन्नेव "एकमेवाद्वितीयं ब्रह्म" "सच्च त्यच्चाभवत्" इत्युपनिषदुक्तरीत्या सद्रूपः (१)एको हि पुरुषो बहुधा जायते। हिशब्दः प्रसिद्धौ।(२)अपि च अस्मिन्नर्थे प्रमाणम्—"इन्द्रो मायाभिः पुरुरूप इयते" (३)इति।

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥

इति (४)रीत्या सत्यमेक (५)एव शिवो भवति (६)तथापि जीवप्राणात्मना (७)बहुधा भिन्नमितीममर्थं द्योतयितुं विद्यायां बहवः श्रीकण्ठाः स्थिता इत्यर्थः।

(८)अक्षराणां वासनामुक्त्वा बिन्दूनां नादादीनां च वासनामाह—रुद्रेश्वर इति। रुद्रस्ते (९)जस्तत्त्वाधिपतिः, तेजस्तत्त्वान्तर्भूतपुरुषरागविद्या (१०)कलानियतिकालमायान्तम्। तदुक्तं स्वच्छन्दसंग्रहे—

पुरुषादिकमायान्तं तेजस्तत्त्वम्महेश्वरि। (११)इति।

---

[ १ ] 'एकोऽपि' ख०
( २ ) 'अपि च' नास्ति क०
( ३ ) 'इति' नास्ति क०
( ४ ) 'रीत्या' नास्ति ख०
( ५ ) 'एव' नास्ति ख०
( ६ ) 'तथापि' नास्ति ख०
[ ७ ] 'बहुधा' नास्ति ख०
[ ८ ] 'अक्षराणां हि' ख०
[ ९ ] 'तेजोऽधिप' ख०
( १० ] 'विद्यानियतिकालकलामायान्तम्' ख०
[ ११ ] 'इति' नास्ति क०

बिन्दुत्रयेण कथिता अमितामितविग्रहाः ॥

शान्तिः शक्तिश्च शम्भुश्च नादात्रितयबोधनाः ॥४६॥

---

(१)शुद्धविद्येश्वरसदाशिवा वायुतत्त्वात्मकाः । (२)तदुक्तं स्वच्छन्दसंग्रहे—

विद्या चेश्वरसादाख्यौ वायुतत्त्वं (३)समीरितम् । इति ।

अतो रुद्रेश्वरसदेशाख्या देवता मितविग्रहाः परिच्छिन्नरूपाः । (४)तदुक्तं स्वच्छन्दसंग्रहे—

यत्सदाशिवपर्यन्तं (५)विनाशोत्पत्तिसंयुतम् । इति(६)॥४५॥

बिन्दुत्रयेण कथिताः बिन्दुत्रयं त्रिबीजाशिखरवर्तिकामकलोर्ध्वगतानां बिन्दूनां त्रितयम् । (७)अमितामितविग्रहाः । शान्तिः शक्तिश्च शम्भुश्च नादात्रितयबोधनाः । शान्तिरव्यक्तध्वनिलक्षणो नादोऽखिलञ्जगदधरीकृत्य यत्र लयमेति (८)सा ब्रह्मरन्ध्रावसानभूमिः, ऊर्ध्वशक्तीनां प्रशान्तस्थानहेतुत्वात् । तदुक्तं स्वच्छन्दसंग्रहे—

नाड्याधारस्तु (९)नादो वै भित्त्वा सर्वमिदं जगत् ।

अधः शक्त्या (१०)विनिर्गत्य ऊर्ध्वशक्त्यवसानकः ॥

---

(१) 'ईश्वरसदाशिवौ वायुतत्त्वात्मकौ' ख०

[२] 'तदुक्तमत्रैव-विद्या' ख०

(३] 'रितम् । अत एव रुद्रे' क०

[४] 'तदुक्तमत्रैव-यत्सदा' ख०

[५] 'विभागोत्प' ख०

[६]'इति' नास्ति क०

[७]'अमितामितविग्रहाः' नास्ति क०

[८]'मेति सब्रह्म' ख०

[९]'नादान्तो' ख०

[१०] 'विनिर्भिद्य' ख०

नाड्यां ब्रह्मबिले लीनस्त्वव्यक्तध्वनिलक्षणः । (१) इति ।

(२)शक्तेरूर्ध्वशक्तेरुपरिगतं शक्तितत्त्वम् । तदुक्तमत्रैव—

ब्रह्माणी (३)त्वं परा शक्तिः ब्रह्म (४)णोत्सङ्गगामिनी ।
द्वारं सा मोक्षमार्गस्य रोधयित्वा व्यवस्थिता ॥
तां भित्त्वा तु वरारोहे ऊर्ध्वशक्तिं परां शिवाम् ।
शक्तितत्त्वात्मिकां (५)देवीं प्रसुप्तभुज (६)गाकृतिम् ॥
शक्तितत्त्वं समाख्यातं भुवनै (७)राश्रितं महत् ॥ इति ।

(८)शम्भुः शिवतत्त्वं शक्तितत्त्वोपरि स्थितम् । तदुक्तमत्रैव—

(९)शक्तितत्त्वं समाख्यातं शिवतत्त्वं तदूर्ध्वतः ।(१०)इति।

अपि (११)तामितविग्रहाः । (१२)एते अनन्ताः अपरिच्छिन्नरूपाः व्योमतत्त्वान्तर्गतत्वात् । तदुक्तमत्रैव—

"(१३)शक्तितत्त्वं शिवो व्योम" इति । नादात्रितयबोधनाः । वाग्भवकामराजशक्तिबीजोपरिगतबिन्दुत्रयोपरिगतरोधि-

---

(१) 'इति' नास्ति क०
(२) 'शक्तिरूर्ध्वशक्ति' ख०
(३) 'त्वपरा' ख०
(४) 'ब्रह्मणो सङ्ग' ख०
(५) 'देवि' ख०
(६) 'गाकृती' क०
(७) 'रावृतं महत् ॥ ' क०
(८) 'शम्भुः शिवः शिव' ख०
(९) 'शिवतत्त्वं समाख्यातं तदूर्ध्वं शक्तितत्त्वतः' ख०
(१०) 'इति' नास्ति क०
(११) 'ताम्बित' क०
(१२) 'अत एवमनन्तापरि' ख०
(१३) 'शिवतत्त्वं शिवाविति' ख०

वागुरामूलवलये सूत्राद्याः कवलीकृताः ॥
तथा मन्त्राः समस्ताश्च विद्यायामत्र संस्थिताः॥ ४७॥

---

नीत्रित (१)योर्ध्वगतानां नादानां (२)त्रितयम् । एवंक्रमेण बोधकं लक्षकं, तेन नादात्रितयबोधनाः । वाग्भवबीजोपरिगत-बिन्दुपरिवर्तिना नादेन शान्तिः, कामराजबीजशिखरवर्तिना नादेन शक्तिः, तार्तीयबीजाशिखरवर्तिना नादेन च शिवो व्य-(३)ज्यते ॥ ४६ ॥

पूर्वं विद्याया बिन्दुनादमयवासनामुक्त्वा इदानीं सर्वमन्त्रम-यतामपि (४)वासनां सोदाहरणमाह—वागुरेति । वागुरा मृग-बन्धिनी, अत्र तु वागुराशब्देन मत्स्यग्रहणहेतुर्जालं लक्ष्यते प्राणि-ग्रहणसामान्यात् । अन्यथा मूलवलये (५)सूत्राद्या इत्यनुपपन्नं स्यात् । मृगबन्धिन्या मूलवलयस्याभावात् रज्जुनिर्मितत्वा-त्सूत्रादीनामपि अभावात्सूत्राद्याः सूत्राणि (६)तन्तवः आ-द्यशब्दाज्जालप्रान्ते आयसगुलिकाः प्रोता गृह्यन्ते यथा लोह-मये वलये जालाव (७)यवभूतानां तन्तूनां (८)मूलमाकलितं, तथा समस्तमन्त्राणां मूल (९)भूता वैखर्यपि विद्यायामस्यां

---

(१) 'तयोर्ध्वभागगतानां' ख०
(२) 'त्रयमेषां क्र' ख०
(३) 'व्यज्यते इत्यर्थः' ख०
(४) 'वासनामाह' ख०
(५) 'सूत्राद्या' नास्ति ख०
(६) 'तन्तव इति' ख०
(७) 'वयवानां तन्तूनां' ख०
(८) 'मूल कवालितं' ख०
(९) 'भूतायां वैखरीवि' ख०

गुरुक्रमेण संप्राप्तः संप्रदायार्थ ईरितः ॥

---

विश्रान्ता (१)अतोऽत्र विद्यायां समस्त (२)मन्त्राश्च संस्थिता इत्यर्थः ॥ ४७ ॥

गुरूपदेशक्रमेणायमर्थः संप्राप्यत इत्याह—गुरुक्रमेणेति । गुरुक्रमः पारम्पर्यक्रमः, तदुपदेशक्रमेणैव । (३)तदुक्तमत्रैव—

शिवादिविग्रहात्पूर्णात्सर्वकारणकारणात् ।
ध्वनिरूपं परं सूक्ष्मं शुद्धं सकलतेजसाम् ॥
वाग्रूपं प्रसृतं तत्त्वमुन्मनाशक्तिकेवलम् ।
अव्यक्तं व्यक्तरूपेण निष्कलक्रमकारणम् ॥
परानन्दस्वरूपं तत् स्वच्छन्दादिप्रभेदतः ।
अनुष्टुप्छन्दसा बद्ध्वा प्राह स्वच्छन्दभैरवः ॥
तद्वि (४)मृश्य प्रपञ्चेन प्रोवाचानाश्रितेश्वरः ।
तत्सर्वं शान्त्यतीतांशे कथितं बहुविस्तरम् ॥
तदेतत्पररूपेण सदाख्येन शिवेन तु ।
मन्त्रासिंहासनस्थेन पञ्चमन्त्रशरीरिणा ॥
(५)कौलिकादिषु सिद्धान्तपूर्वाद्य(६)मखिलागमम् ।
साधनं पुरुषार्थस्य कौलिकञ्चा (७)प्यकौलिकम् ॥
असंख्यमप्रमेयञ्च शिवेन कथितं पुरा ।

---

(१) 'अतो विद्यायामत्र' ख०
(२) 'मन्त्राः स्थिता' ख०
(३) 'तदुक्तमत्रैव' नास्ति ख०
(४) 'तद्विमर्शप्र' ख०
(५) 'कालिकादिषु' ख०
(६) 'द्याखिलमागमम' ख०
(७) 'कञ्चातिकौ' ख०

नि(१)गर्भार्थो महादेवि शिवगुर्वात्मगोचरः ॥ ४८॥

तज्ज्ञानमीश्वरे दत्तमीश्वरेण शिवेच्छया ॥
विद्यायामादितो दत्तं विद्येशाय च तत्त्वतः ।
विद्येश्वरेण (२)तद्दत्तं ज्ञानं नियमिकं (३)क्रमात् ॥
दत्तं रुद्रेभ्य एतच्च गुणतत्त्वेश्वराय च ।
श्रीकण्ठायेश्वरेणैव दत्तं तेन ततः परम् ॥
श्रीकण्ठेन (४)प्रधानादिदश रुद्रान्तिकं क्रमात् ।
दीक्षयित्वा विधानेन दत्तं वै ज्ञानमम्बिके ॥
दीक्षयित्वाऽभिषिच्याथ श्रीकण्ठेन मयाऽपि च ।
दत्तं श्रीदक्षिणं सर्वं सर्वकामार्थसाधनम् ॥

इति स्वच्छन्दभैरवोक्तरीत्या (५)मयोदितस्वगुरुपारम्पर्योपदेशक्रमेणैव विषमपदैरसम्प्रदायविद्भिरपरिज्ञातार्थकोशैः(६)पूर्वोक्तरीत्या कथितः सम्प्रदायार्थः विना गुरूपदेशं व्युत्पत्तिबलेन पुराणादिश्लोकवद् ग्रहीतुमशक्य इत्यर्थः ॥

अथ क्रमप्राप्तं निगर्भार्थमाह—निगर्भार्थ इति । (७)निगर्भार्थः शिवो वाङ्मनसगोचरः सकलनिष्कलभेदविशेष्यः । (८)आत्मादिसकलगुणाभिधः तादृशमेव स्वात्मतया वीक्षमाणो विदिताखिलागमार्थो गुरुस्तादृशगुरुकरुणाकटाक्षपातविगलित-

(१) 'निगर्भोऽपि' ख०
(२) 'दत्तं तज्ज्ञानं' ख०
(३) 'नियमकं' क०
(४) 'प्रदानादि' ख०
(५) 'धनुश्चिह्नान्तर्गतं नास्ति ख०
(६) 'श्लोकैः' ख०
(७) 'निगर्भो निगर्भार्थः' ख०
(८) धनुश्चिह्नान्तर्गतं नास्ति ख०

तत्प्रकारं च देवेशि दिङ्मात्रेण वदामि ते ॥
शिवगुर्वात्मनामैक्यानुसंधानात्तदात्मकम् ॥ ४९॥

---

सकलपाशविशदचिद्रूपानुभवः (१)शिष्य आत्मा । तदुक्तं (२)स्वच्छन्दसङ्ग्रहे—

तत्त्वातीतं वरारोहे वाङ्मनोतीतगोचरम् ।
(३)अनिष्कलश्चासकलं नीरूपं निर्विकल्पकम् ॥
निर्द्वन्द्वं परमं तत्त्वं शिवाख्यं परमं पदम् ॥ इति ।
सर्वविद्याविदाचार्यो मोक्षधर्म (४)परायणः ।
गुरुवक्त्रप्रयोगेण पशुं तत्रैव योजयेत् ॥ इति(५) ।

गुरुः— गृणते तत्त्वमात्मीयमात्मीकृतजगत्त्रयम् ।
उपायोपेयरूपाय शिवाय गुरवे नमः ॥ इति ।

एवंविधशिव (६)गुर्वात्मैक्यगोचरानुसंधानात्मको निगर्भार्थ इत्यर्थः ॥ ४८ ॥

(७)ननु केन प्रकारेण शिवगुर्वात्मनामैक्यमनुसन्धीयत इत्यत आह—तत्प्रकारं चेति । तत्प्रकारं दिङ्मात्रेण वदामि (८)न विशेषप्रतिपादनप्रपञ्चेनेत्यर्थः ॥ ४९ ॥

---

(१) 'शिष्य' नास्ति ख०
(२) 'महास्वच्छन्द' ख०
(३) 'सुनिष्कलं वा सक' ख०
(४) 'मोक्षदान' क०
(५)'इति गुरुः' नास्ति क०
(६) 'गुर्वात्माशिष्यपरानु' ख०
(७) 'ननु' नास्ति ख०
(८) 'नाशेषविशे' ख०

निष्कलत्वं शिवे बुध्वा तद्रूपत्वं गुरोरपि ॥
तन्निरीक्षणसामर्थ्यादात्मनश्च शिवात्मताम् ॥ ५० ॥

---

तत्प्रकारमाह—निष्कलत्वमिति । कलाः अवय(१)-वाः ,निष्कलत्वं निरवयवत्वम् । (२)शिवे पूर्वोक्तलक्षणे बुध्वा

गृणते तत्त्वमात्मीयमात्मीकृतजगत्त्रयम् ।
उपायोपयरूपाय शिवाय गुरवे नमः ॥

इत्यभियुक्तवचनोक्तरीत्या निष्कलं (३)निष्कलात्मकं शिवं स्वात्मतया वीक्षमाणस्यैव गुरुत्वाद् गुरोरपि तद्रूपत्वं (४)शिवात्मत्वं बुध्वा तन्निरीक्षणसामर्थ्याद्

गुरो (५)राज्ञामभावेण केवलं निष्प्रपञ्च (६)कम् ।
निरीक्ष्यैतादृशाद्वैताचिदम्बुधिसु (७)धार्द्रया ॥
यया विशुद्धः शिष्येऽपि(८) लीयेतानन्दचिद्घनः ।

इत्यादिवाक्योक्तरीत्या (९)तस्य गुरोर्नि(१०)रीक्षणान्निखिलपाश(११)भेदसामर्थ्यं, तत्सामर्थ्यवशात् विशुद्धः शिष्यो

---

(१) 'वाः तद्राहितत्वं निष्क' क०
(२) 'शिवेन पूर्वोक्तलक्षणेन' क०
(३) 'निखिला' ख०
(४) 'शिवात्मकत्वं' ख०
(५) 'राज्ञापालनेन' ख०
(६) 'निष्प्रपञ्चनिरीक्षयाता' ख०
(७) 'सुधाद्रवीभूततया' ख०
(८) 'अपि' नास्ति ख०
(९) 'तस्य' नास्ति ख०
(१०) 'निरीक्षणं नि' ख०
(११) 'पाशभेदनसमर्थम्' क०

भावयेद्भक्तिनम्रः स (१) ङ्कोचोन्मेषाकलङ्कितः ॥
कौलिकं कथयिष्यामि चक्रदेवतयोरपि ॥५१॥
विद्यागुर्वात्मनामैक्यं, तत्प्रकारः प्रदर्श्यते ॥

भक्तिनम्रः (२)प्रत्युत्पन्नपरमशिवाहंभाव(३)भावनाप्रवणः । प्रत्यहमा(४)दरान्नैरन्तर्याभ्यासवशात् (५)सङ्कोचोन्मेषाकलङ्कितः (६)सङ्कोचः संसारित्वाभिमानः तस्योन्मेषः पुत्रभार्यादिबाह्यार्थाभिरतिः तेनाकलङ्कितः विगताहंममताभिमान आत्मनश्च शिवात्मतां भावयेत् । जपाकुसुमसामीप्य(७)विरहात्स्फटिकस्य नैर्मल्यमिवात्माद्वैतभावनाभावितगुरुकटाक्षपातपाटितपाशपटलः परिपूर्णस्व(८)भावं पश्येदित्यर्थः ।

अथ क्रमप्राप्तं कौलिकार्थमाह—कौलिकमिति । कौलिकं कौलिकार्थं कथयिष्यामि चक्रदेवतागुरुविद्यासाधकानामैक्यानुसन्धानं कौलिकार्थ इत्यर्थः । (९)अक्षरार्थः स्फुटः ।

तत्प्रकारमाह—तत्प्रकार इति । "तत्प्रकारः प्रदर्शितः" इत्यादि "इत्येवं कौलिकार्थस्तु कथितो वीरवन्दिते ॥" इत्यन्तेन ।

---

(१) 'नम्रः सन् शङ्कोन्मेषा' ख० घ०
(२) 'भक्त्युत्पन्नः प' क०
(३) 'भावनया प्रवेशः' ख०
(४) 'मादरनैरन्तर्यपद्वभ्या' ख०
(५) 'शङ्कोन्मेषा' ख०
(६) 'शङ्का सङ्कोचः' ख०
(७) 'विगमात्' ख०
(८) 'स्वभावः स्यादित्यर्थः । अनन्तरं क्रम' ख०
(९) 'अक्षरार्थः स्फुटः' नास्ति क०

लकारैश्चतुरस्राणि वृत्तत्रितयसंयुतम् ॥५२॥
सरोरुहद्वयं शाक्तैरग्नीषोमात्मकं प्रिये ॥
हृल्लेखात्रय (१)संभूतैरक्षरैर्नवसङ्ख्यकैः॥ ५३ ॥

आदौ विद्याचक्रयोरैक्यमाह—लकारैरिति । लकारैः विद्याबीजत्रयगतैश्चतुरस्राणि भूगृहाणि

पृथिवीमण्डलं पीतं चतुरस्रं सुशोभनम् ।

इति स्वच्छन्दसंग्रहोक्तरीत्या भूमण्डलस्य चतुरस्ररूपत्वाद् भूतत्त्ववाचकैर्लकारैश्चतुर (२)स्रत्रयं जातमित्यर्थः

शाक्तैः (३)( सकारैः । तदुक्तं चतुःशतीशास्त्रे—"मादनं तदधः शक्तिः" । हंसपरमेश्वरेऽप्युक्तम्—

शिवो हकार इत्युक्तः सकारः शक्तिरव्यया ॥
विद्याबीजत्रयगतैः )

सकारैर्वृत्तत्रितयसंयुतं सरोरुहद्वयं चतुरस्रान्तरेण एकं वृत्तं, तद्वृत्तान्तःषोडशदलं सोमात्मकं पद्मं, तदन्तश्च द्वितीयं वृत्तं, तदन्तश्चाष्टदलं पद्ममग्न्यात्मकं, तदन्तश्च तृतीयं वृत्तम्, एवं वृत्तत्रितयसंयुतम् अग्नीषोमात्मकं सरोरुहद्वयं

जलबिम्बं सुवृत्तं च (४)श्वेतं वै पद्मलाञ्छितम् ।

इति स्वच्छन्दसंग्रहोक्तरीत्या जलबिम्बस्य पद्मलाञ्छितवृत्तरूपत्वाज्जलतत्त्ववाचकैः सकारैः वृत्तत्रयसंयुतं सरोरुहद्वयं जातमित्यर्थः ।

बीजत्रय(५)शिखरगतहृल्लेखात्रयावयवभूतैरक्षरैर्हकाररेफेका-

(१) 'संयुतैः' ख० (२) 'स्रं जात' ख०
(३) धनुश्चिह्नान्तर्गतं खपुस्तके नास्ति ।
(४) 'श्वेयं' ख० (५) 'त्रयं शिखर' ख०

बिन्दुत्रययुतैर्जातं नवयोन्यात्मकं प्रिये ॥
मण्डलत्रययुक्तं तु चक्रं शक्त्यनलात्मकम् ॥५४॥
व्योमबीजत्रयेणैव प्रमातृत्रितयान्वितम् ॥

---

राख्यैर्बिन्दुत्रय (१)संयुतैर्नवसंख्यात्मकै र्नवयोन्यात्मकं चक्रं जातमित्यर्थः ।

ननु पद्मद्वयानन्तरं चतुर्दशारदशारद्वयात्मकचक्रत्रितयस्य कथने युक्ते तदुल्लङ्घ्य नवयोनिचक्रं कथं (२)कथ्यत इति चेत् ? उच्यते, नवयोनिचक्रस्योपरिष्टात्प्रस्तारे कृते (३)सति तिसृभिः शक्तिभिर्वह्निभिश्च द्विदशचतुर्दश(४)कोणात्मकं (५)चक्रत्रयं जात(६)मतो नवयोनिचक्रानन्तरमेतच्चक्रत्रयं जायत इत्येतन्मनसि निधायाह—मण्डलेति । मण्डलत्रययुक्तं तु (७)(वृत्तत्रयान्तर्गतशक्त्यनलात्मकं चक्रं ) नवयोनिचक्रस्योपरिष्टात्प्रस्तारे कृते सति तिसृभिः शक्तिभिरनलैश्च (८)त्रिभिर्निष्पन्नत्वाद् द्विदशारचतुर्दशा(९)रादिचक्रत्रयं(१०)(व्योमबीजत्रयेणैव हकारत्रयेणैव हकारस्य व्योमवाचकत्वात् । हल्लेखात्रये हकारत्रयं गतं

---

(१) 'सं' नास्ति' ख०
(२) 'कथितम् ? उच्य' ख०
(३) 'सति' खपुस्तके नास्ति ।
(४) 'शारात्मकम्' ख०
(५) 'त्रयं' खपुस्तके नास्ति ।
(६) 'तं ततो' ख०
(७) धनुश्चिह्नान्तर्गतं खपुस्तके नास्ति ।
(८) 'तिसृभिः' क०
(९) 'शारकोणात्मकं' ख० ।
(१०) कंसान्तर्गतं नास्ति क०

इच्छाज्ञानक्रियारूपमादनत्रयसंयुतम् ॥ ५५ ॥

---

शिष्टेन हकारत्रयेण चतुर्दशारादि चक्रत्रयं) जातमित्यर्थः। प्रमातरस्त्रि(१)विधा उक्तरूपाः अशुद्धशुद्धमिश्रात्मानस्तेषां त्रयेणान्वितम्। पश्चाच्छिवानु(२)गृहीतमलकर्मविपाकात्पृथिव्यप्तेजोवाय्व(३)धिपतीनां तेषां त्रयेण (४)व्यष्ट्या समष्ट्या चेदमन्वितं प्राप्तम्। तदुक्तं स्वच्छन्दसंग्रहे—

मलादीनामपाके तु सामान्यानुग्रहो भवेत्।
आधिकारिकमैश्वर्यं शिवानुग्रहमात्रतः॥
पशवस्त्रिप्रकारास्तु प्राप्नुयुः परमेश्वरि !।
(५)ये पक्वमलकर्माणस्तान् किञ्चिदनु (६)गृह्य च॥
जलतत्त्वादितत्त्वानां मध्ये लोकेश्वरास्त्रि(७)धा।

(८)इच्छाज्ञानक्रियाशक्तिप्रधान(९)मातृत्रयाणां (१०)रूपाणां त्रयाणां मादनानां ककाराणां त्रयेण संयुतं सम्मिश्रितं सदाशिवासनं पृथिव्यादिवायुतत्त्वा(११)न्तचतुस्तत्त्वाधिपतिभिः ब्रह्मविष्णुरु(१२)द्रेश्वरैश्चतुर्भिः पादरूपेण धृतम् पञ्चमहाभूता-

---

(१) 'त्रिधा' ख० (२) 'नुग्रहतो' ख०
(३) 'स्वधिपतयः' ख०
(४) 'व्यष्टिसमष्टितया वा' ख०
(५) 'अपक्व' ख०
(६) 'ह्यताम्' ख०
(७) 'धा इति' ख०
(८) 'यारूपमादनत्रयसंयुतम् इच्छाज्ञानक्रिया' ख०
(९) 'प्रमातृ' ख०
(१०) 'त्रयरूपाणां' ख०
(११) 'त्वान्ताधि' ख०
(१२) 'रुद्रै' क०

सदाशिवासनं देवि महाबिन्दुमयं परम् ॥
इत्थं मन्त्रात्मकं चक्रं देवतायाः परं वपुः ॥५६॥

काशाधिपतिसदाशिवरूपपञ्चमयासनम्। महाबिन्दुमयं परम्।

परशिवरविकरनिकरे प्रतिफलति विमर्शदर्पणे विशदे।
प्रतिरुचिरुचिरे कुड्ये चित्तमये निविशते महाबिन्दुः॥

इति कामकलाविलासोक्तरीत्या परशिवप्रतिबिम्बमहाबिन्द्वात्मकं पर(१)मुत्कटं शिवशक्त्योरधिवासयोग्यत्वात्। तदुक्तं ज्ञानदीपविमर्शिन्याम्–(२)"ओड्याणपीठ(३)मध्ये कदम्बवनान्तर–श्रीमञ्च(४)चतुष्पादके लं पृथिव्यधिपतये ब्रह्मणे नमः। वं अपामधिपतये विष्णवे नमः। रं तेजोधिपतये रुद्राय नमः। यं वाय्वधिपतये ईश्वराय नमः। एतानभ्यर्च्य हं (५)आकाशाधिपतये पञ्चव (६)क्त्रसदाशिव(७) महाप्रेता(८)सनाय नमः।" (९)( इति श्रीमञ्चाकारं सदाशिवमभ्यर्च्य ) इत्थमुक्तप्रकारेण मन्त्रात्मकं चक्रं सौभाग्यविद्यमित्यर्थः।

इदानीं चक्रेण देवताया ऐक्यमाह–देवताया इति। चक्रं देवतायाःपरम् अन्यत् वपुः। "ततः पद्मनिभां देवीम्" इत्यत्र देव-

(१) 'मुत्कृष्टं' ख०
(२) 'उड्डीयान' ख०
(३) 'ठे मध्ये' ख०
(४) श्रीमञ्चपादचतुष्कादधःकेलं ख०
(५) 'हं' नास्ति क०
(६) 'पञ्चवक्त्राय' ख०
(७) 'वाय' ख०
(८) 'प्रेत पद्मा' ख०
(९) धनुश्चिह्नान्तर्गतं खपुस्तके नास्ति।

एकादशाधिकशतदेवतात्मतया पुनः ॥

---

तायाः करचरणादि (१)मद्वपुरुक्तं, तदेव (२)त्रिकोणादिभूगृहान्तश्रीचक्रपदनिवासावरणदेवतारूपेणावयवशो विभज्य बैन्दव(३)निवासिनी स्वसंविद्देवता श्रीचक्रा(४)परवपुषा स्थितेत्यर्थः । तदुक्तमत्रैव—

(५)(स्वेच्छाविश्वमयोल्लेखखचितं विश्वरूपकम् ।
चैतन्यमात्मनो रूपं निसर्गानन्दसुन्दरम् ॥
इच्छाशक्तिमयपाशमङ्कुशज्ञानरूपिणम् ।
क्रियाशक्तिमये बाणधनुषी दधदुज्ज्वलम् ॥
आश्रयाश्रयिभेदेन अष्टधा भिन्नहेतिमत् ।
अष्टारचक्रसंरूढं नवचक्रासनास्थितम् ॥ )
एवं रूपं परं तेजः श्रीचक्रवपुषा स्थितम् ।
तदीयशक्तिनिकरस्फुरदूर्मिसमावृतम् ॥

एतदेवोपपादयति—एकादशेति । (६)एकादशोत्तरशतदेवतात्रिकोणाग्रदक्षवामकोणेषु कामेश्वर्यादिकास्तिस्रस्तद्बहिरष्टकोणान्तराले त्रिकोण(७)परितश्चतुर्दिक्षु अष्टौ कामेश्वरकामेश्वर्यायुधदेवता अष्टकोणे अष्टौ वशिन्याद्या अष्टकोणा-

---

(१) 'यत् तदेव' ख०
(२) 'बैन्दवात्रिको' ख०
(३) 'बैन्द वासनं स्वसं' ख०
(४) 'चक्रवपुषा' ख०
(५) धनुश्चिह्नान्तर्गतं खपुस्तके नास्ति ।
( ६ ) 'एता' एक ख०
( ७ ) 'गान्वित च' ख

गणेशत्वं महादेव्याः ससोमरविपावकैः ॥ ५७ ॥

न्तराले षडङ्गदेवताः, अन्तर्दशारे सर्वज्ञाद्या(१)दश, द्वितीय दशारे सर्वसिद्धि(२)प्रदाद्यादश चतुर्दशारे सर्वसङ्क्षोभिण्याद्याश्चतुर्दश, अष्टदले अष्टानङ्गकुसुमाद्याद्याः, षोडशदले कामाकर्षिण्याद्याः षोडश, अन्तश्चतुरस्रे मुद्रादेवता दश, मध्ये चतुरस्रे ब्रा(३)ह्म्याद्या अष्टौ, बाह्यचतुरस्रे अणिमाद्या दश । एवमेकादशोत्तरश(४)तदेवतात्मत(५)या तासामाधारभूता श्रीचक्ररूपिणी दे(६)वतेत्यर्थः । नन्वयं कौलिकार्थो वामकेश्वरत(७)न्त्रे कुत्र सूचित इत्याशङ्कां परिहरन् देवता(८)विद्याचक्रगुरुशिष्याणा-(९)मैक्यमेव गणेशेत्यत्र सूचितम् ।

कौलिकार्थं विवृणोति–गणेशत्वमिति ।([१०]पुनः शब्दादेकादशाधिकशतदेवतात्मतया अस्या गणेशत्वम् । गणेशत्वं महादेव्या इत्यनेनापि काकाक्षिन्यायतः पूर्वोक्तत्रिकोणादिचतुरस्रान्तपदनिवास्यैकादशाधिकशतदेवतात्मतया) [११]तत्सङ्ख्याकदेवतासमुदायो गणः । देव्याः सोमरविपावका ने

(१) 'दश द्वितीयं' नास्ति क० ।
(२) 'सिद्ध्याद्या दश' ख०
(३) 'ब्रह्माद्या' क०
(४) 'शत' नास्ति ख०
(५) 'तया समाकारभूतश्री' ख०
(६) 'श्रीचक्रदेव' ख०
(७) 'तन्त्रेऽथ कुत्र सूत्रे सूचित' क०
(८) 'विद्याचक्र' नास्ति ख०
(९) 'मैक्यार्थमेव' ख०
(१०) कंसान्तर्गतो ग्रन्थो नास्ति ख०
(११) 'महादेव्यास्तु तत्सं' ख०

इच्छाज्ञानक्रियाभिश्च गुणत्रययुतैः पुनः ।

ग्रहरूपा च सा देवी ज्ञानकर्मेन्द्रियैरपि ॥ ५८ ॥

तदर्थैरेव देवेशि करणैरान्तरैः पुनः ।

प्रकृत्या च(१)गुणेनापि पुंस्त्वबन्धेन चात्मना॥५९॥

---

त्ररूपेण स्थिताः ।

"इच्छा शिरःप्रदेशस्था ज्ञाना च तदधोगता ।

[२]क्रिया पादगता ह्यस्याः"

इति सङ्केतपद्धत्युक्तरीत्या इच्छादिका मूर्धाद्यवयवाः, गुणाः सत्त्वरजस्तमांसि [३]एवं स्वावयवभूतैस्तैर्नवभिः ग्रहरूपा च [४]सा देवी ।

ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि बोधकरणानि, कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि, तेषामर्थाः शब्दस्पर्शरूपरसगन्धाः वचनादानगमनाविसर्गानन्दाश्च, करणानि मनोबुध्यहङ्कारचित्तान्यान्तराणि च, प्रकृतिः गुणसाम्यमव्यक्तं, गुणो गुणतत्त्वं सुखदुःखमोहानां मूलं, पुंस्त्वबन्ध आत्मा पुरुषतत्त्वम् । तदुक्तं स्वच्छन्दसङ्ग्रहे—

एभिर्मायादिभिः षड्भिः परिपूर्णः पशुः पुमान् ।

भुङ्क्ते भोगान्यथा देवि तथा पुरुषसंज्ञकः ॥

सैव मायाऽथ भोगार्थं पशोरव्यक्तसंज्ञकम् ।

---

(१) 'गुणेनाथ' ख०

(२) 'क्रिया पादगता ह्यस्याः' नास्ति कपुस्तके, किन्तु तत्र 'तस्याः' इत्येव वर्तते ।

(३) 'एवं' नास्ति क०

(४) 'सा देवी' नास्ति ख०

मूलप्रकृतिविश्वस्य गुणत्रितयरूपकम् ॥
अभूत्तस्यां प्रकृत्यां तु गुणतत्त्वं बभूव ह।
तद्दुःखसुखमोहानां मूलं सत्त्वं रजस्तमः ॥
बुद्धिव्यापारनिचयरूपं व्यक्तगुणात्मकम् [१]।
विषयात्मा तु बुद्धिः स्याद्[२]गुणास्तत्र प्रयोजकाः ॥
गुणत्रयानुसारेण त्रिधा कर्मानुसारतः।
तया बुद्ध्या समुद्भूतोऽहङ्कारस्त्रिप्रकारकः ॥
सर्वजीवनसंरम्भरूपेण कमलासने।
(३)विषयास्तस्य भेदाश्च त्रिधा कर्मानुसारतः ॥
सोऽयं तैजसवैकारिभौतिकाख्यस्वरूपतः।
विकाराश्च स्वभेदाश्च वागादीन्द्रियसंहतौ ॥
वा(४)चिकाद्याः स्युरेतानि तत्र तत्र नियन्तृभिः।
प्राप्नोति (५)सात्त्विकाद्याभिरवस्था(६)भिरगात्मजे ॥
(७)संकल्पकारकं चेच्छारूपं तैजसतो मनः।
जातं वैकार्यवस्थाभिर्ज्ञानकर्मेन्द्रियाणि च ॥
(८)भूततन्मात्रशब्दस्पर्शरूपरसगन्धकाः।

---

(१) 'गुणात्मकम्। विषयाध्यवसायात्मा बुद्धिः स्याद् गुणतत्त्वतः' क०
(२) 'गुणस्तत्र प्रयोजना। पाठान्तरे तु गुणत्रया' इति कपुस्तके।
(३) 'विशतस्तत्र भेदेन' ख०
(४) 'वाचकार्थाः स्युरीशानि' ख०
(५) 'सा तु विद्याभि' ख०
(६) 'स्थाभिर्नगा' ख०
(७) 'संकल्पकारणं वर्ष्म ज्ञानकर्मेन्द्रियाणि च' इत्येव खपुस्तके।
(८) 'भूतादीन्यथ तन्मात्राः शब्दस्पर्शरूपरसाः। गन्धाद्याः पञ्चका जाताः। देहेन्द्रियाणां व्यापाराः प्रोच्यन्ते परमेश्वरि' क०

नक्षत्रविग्रहा जाता, योगिनीत्वमथोच्यते ।
त्वगादिधातुनाथाभिर्डाकिन्यादिभिरप्यसौ ॥ ६० ॥
वर्गाष्टकनिविष्टाभिर्योगिनीभिश्च संयुता ।

---

जाता वागादीन्द्रियाणां व्यापाराः परमेश्वरि ॥
श्रोत्रत्वक्चक्षूरसनाघ्राणान्येतानि पञ्च च ।
बुद्धीन्द्रियाणि, व्यापारास्तेषामेकैकशः क्रमात् ॥
शब्दस्पर्शरूपरसगन्धानां ग्रहणं प्रिये ।
कर्मेन्द्रियाणि वाक्पाणिपादपायुरुपस्थकाः ॥
वचनादानगमनविसर्गानन्दकं क्रमात् ।
कर्मेन्द्रियाणां व्यापाराः पञ्चानां परिकीर्तिताः ॥
एतानि दश बाह्यानि क्रमेणाभ्यन्तरत्रयम् ।
मनो बुद्धिरहङ्कारो ह्यन्तःकरण(१)संज्ञकम् ॥ इति ।

एतैः स्वावयवभू(२)तैः सप्तविंशतिभिर्नक्षत्रविग्रहा जाता देवी (३)स्वेच्छागृहीतविग्रहा ।

(४)(त्वगादिधातवः त्वगसृङ्मांसमेदोमज्जाशुक्राणि धातवः, तेषां नाथा अधिष्ठात्र्यो डाकिन्याद्याः, डाकिनी राकिनी लाकिनी काकिनी साकिनी हाकिनी याकिनी च, वर्गा अकचटतपयशाः, तेषामष्टके निविष्टा ब्रह्माण्याद्या योगिन्यः । तदुक्तं स्वच्छन्दसङ्ग्रहे—

---

(१) 'संज्ञकः' इत्येव पाठः कपुस्तके ।
(२ 'सम्भूतैः' ख०
(३) 'स्वयं गृही' ख०
(४) धनुश्चिन्हान्तर्गतो ग्रन्थः खपुस्तके नास्ति ।

योगिनीरूपमास्थाय राजते विश्वविग्रहा ॥६१॥
(१)प्राणापानौ समानश्चोदानव्यानौ तथा पुनः ॥
नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः ॥६२॥
जीवात्मा परमात्मा (२)चेत्येतै राशिस्वरूपिणी ।

---

सर्ववाङ्मयमूला या वर्गाष्टकसमावृता ।
विश्वोत्पत्तिक्रमान्ताष्टशक्तिप्रसृतभैरवैः ॥
शक्तिभिश्च समायुक्ता अक्षान्ता मातृकावलिः ।

चतुःशत्यामप्युक्तम्–

वर्गानुक्रमयोगेन यस्यां मात्राष्टकं स्थितम् ।

एभिः संयुक्ता षडाधारेषु डाकिन्यादिभिर्मातृकास्थूलरूपिणी त्वगादिव्यापकत्वतो "योगिन्यः प्रकटा ज्ञेयाः" इति वक्ष्यमाणरीत्या त्वगादिधातुषु ब्राह्मयादिभिः सेविता सर्वसमाष्टिरूपत्वा· द्योगिनीरूपमास्थाय राजते विश्वविग्रहा । तत्तद्) योगिनीरूपेण विहरति । अत्रैव वक्ष्यति—

अष्टाष्टकं तु कर्तव्यं वित्तशाठ्यविवर्जितम् ।
त्वमेव तासां रूपेण क्रीडसे विश्वमोहिनी ॥ इति (३)।

प्राणादिधनञ्जयान्ता दश वायवः, जीवात्मा उक्तलक्षणः, पशुः, परमाऽत्मा "एष त आत्माऽन्तर्याम्यमृतः" इत्युपनिषदुक्तसर्वभूतान्तर्यामी । एतैर्द्वादशभी (४)राशिस्वरूपिणी ।

---

(१) 'प्राणोऽपानश्च समा' क०
(२) 'च एतै' क०
(३) 'इति' नास्ति क०
(४) 'राशिरूपिणी' ख०

(१)अकथादित्रि(२)पङ्क्त्यात्मा तार्तीयादिक्रमेण सा ॥ ६३

गणेशेत्यादिपदं विद्यापदेऽपि योजयति—अकथादीति । अकारहकारसामरस्यरूपा परा वागादिर्यासां ताः पश्यन्ती-मध्यमावैखर्यो वा (३)चस्तिस्रः परावागादिवाचः । तदुक्तं सङ्केतपद्धत्याम्—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।
हकारोऽन्त्यकलारूपो विमर्शाख्यः प्रकीर्तितः ॥
अनयोः सामरस्यं यत्परस्मिन्महसि स्फुटम् ।
वामाद्यैः (४)पञ्चभिर्योऽसावीश्वरः परिकीर्तितः॥
आदावस्य शिरो रौद्री वक्त्रं वामा प्रकीर्तिता ।
अम्बिका बाहुरित्युक्ता ज्येष्ठा चैव (५)नखाग्रजा ॥
(६)एता हार्धकलारूपा रूपपञ्चतया स्थिताः ।
अवर्णः सर्ववर्णानां न पृथग्भासते बहिः ॥
इच्छा शिरःप्रदेशस्था (७)ज्ञानं च तदधोगतम् ।
(८)क्रिया पादगता ह्यस्य शान्ता हृन्मध्यगा भवेत् ॥
अष्टधानाहतः प्रोक्तः शून्यादि(९)प्रविभागतः ।
शून्यः स्पर्शस्तथा नादो ध्वनिर्बिन्दू तथैव च ॥

---

(१) 'अकारादि' क०
(२) 'पङ्क्त्यात्मता' ख०
(३) 'चश्चतस्रः' क०
(४) 'पिण्डितो योऽसाववर्णः' ख०
(५) 'नगाग्रगा' ख०
(६) 'अ इच्छार्धकलारूपा पञ्चधा यो व्यवस्थितः' ख०
(७) 'क्रिया च तदधोगता' ख०
(८) 'ज्ञाना पादगता ह्यस्य शान्ता हार्धार्धमध्यगा' ख०
(९) 'प्रतिभेदतः' ख०

(१)गणेशोभून्महाविद्या परावागादिवाङ्मयी ॥

---

शक्तिबीजाक्षरं चेति ह्यष्टधानाहतः स्मृतः ।
चत्वारिंशत्सप्तसंख्यानाहतः [२]परिकीर्तितः ॥
क्षकारः कथितो योऽसौ संयोगाद्द्विविधः स्मृतः ।
सप्तपृष्ठ्याख्यमेवं हि मातृकापीठमुत्तमम् ॥
(३)अनाहतत्रिभिर्भेदैर्हतोत्तीर्णैः समन्ततः ।

स्थितो योऽसौ महा(४)पीठो मातृकाख्यो जयत्यसौ ॥

एवमेतत्प(५)रादिचतुर्विधतया वाङ्मयी अस्वरविमर्शरूपौ स्वांशौ (६)"हित्वा चतुष्कला सैवे"इत्यादि सौभाग्यसुभगोदयप्रतिपादितरीत्या परा-पश्यन्ती-मध्यमा-वैखरीमयत्वाद्विद्यायाम् अकथादित्रिपङ्क्त्या(७)त्मकत्वं तार्तीयादि(८)क्रमेण अकथादीति आदिशब्दः अकारककारथकारैस्त्रिभिः सम्बध्यते । आदयो विसर्गान्ताः स्वराः षोडश, कादयस्तान्ताः षोडश, थादयः सान्ताः षोडश । एवमकथादि(९)वर्णा पङ्क्तित्रयात्मतातार्तीयादिकामराजादि(१०)वाग्भवादिक्रमेणाकारादिपङ्क्तिमयं तार्तीयं

---

(१) 'सा गणेशो महा' ख०
(२) 'संख्याहतः स परिकीर्तितः' ख०
(३) 'अनाहतहतैर्मन्त्रैस्त्रिभिर्भेदैः समन्ततः' ख०
(४) 'पीठमकाराख्यो' ख०
(५) 'पराचतु' ख०
(६) 'भित्त्वा चतुष्कला इत्यादि' ख०
(७) 'पङ्क्त्यात्मतार्ती' ख०
(८) 'क्रमेण च अक' ख०
(९) 'वर्णात्मकतार्ती' ख०
(१०) 'आदि' नास्ति ख०

बीजबिन्दुध्वनीनां च त्रिकूटेषु ग्रहात्मिका ॥ ६४ ॥
हृल्लेखात्रयसंभूतैस्तिथिसंख्यैस्तथाक्षरैः ॥
अन्यैर्द्वादशभिर्वर्णैरेषा नक्षत्ररूपिणी ॥ ६५ ॥

---

ककारादिपङ्क्तिमयं कामराजं थकारादिपङ्क्तिमयं वाग्भवं क्रमेण पङ्क्तिशब्दो गणपरः, चतुर्विधमातृकामयत्वात् । अकथादिवैख-र्यादि(१)वर्गगणत्रयबीज(२)त्रयावयवत्वाच्च सेयं महाविद्या गणेशोऽभूदित्यर्थः ।

बीजेति । कूटशब्दोऽत्राक्षर(३)पिण्डपरः। यथोक्तमभियुक्तैः— "कूटेषु त्रिषु (४)कार्यवशादीकारशृङ्गक्रमात्" इति । सौभाग्यवि-(५)द्याया अकारपिण्डेषु, बीजबिन्दुध्वनीनां च बीजम् (६)ईका-रान्तं, बिन्दुःउक्तलक्षणः, ध्वनिः नादः, बीजबिन्दुध्वनीनाञ्चेति तृतीयार्थे छान्दसः प्रयोगः । कूटत्रयबीजानि त्रीणि, बिन्दवस्त्रयः, (७)नादास्त्रयः, इति नवभिर्ग्रहात्मिका(८)विद्येत्यर्थः ॥ ६४ ॥

बीजत्रय(९)त्रयशिखर (१०)वर्तिहृल्लेखात्रयसंभूतैस्तथाक्षरैः हकाररेफईकारबिन्दुनादात्मकैस्तिथिसंख्यकैः पञ्चदशभिरन्यैर्द्वा-

---

(१) 'वर्ग' नास्ति ख०
(२) 'त्रयत्वाच्च' ख०
(३) 'पिण्ड' नास्ति ख०
(४) 'कार्या गौरवकथादिशृङ्गारक्रमात्' ख०
(५) 'विद्याक्षरपि' ख०
(६) 'ईकारान्ताक्षरजातं' ख०
(७) 'नादास्त्रयः' नास्ति क०
(८) 'विद्या' नास्ति क०
(९) 'त्रय' नास्ति ख०
(१०) 'वर्ती ह्रींकारत्रयं तत्संभूतैरथा' ख०

त्रिद्यान्तर्भूतशक्त्याद्यैः शाक्तैः (१)षड्भिस्तथाक्षरैः ॥
(२)योगिनीत्वं च विद्याया राशित्वं चान्त्यवर्जितैः ॥ ६६॥
एवं विश्वप्रकारा च चक्ररूपा महेश्वरी ॥

---

ह्लेखात्रयवर्जितैर्द्वादशवर्णैः कूटत्रयावयवैः पञ्चदशभिर्द्वादशभिश्च (३)सप्तविंशतिवर्णैः सर्वैर्नक्षत्ररूपिणीत्यर्थः ॥ ६५ ॥

(४)विद्यायाः पञ्चदशाक्षर्या अन्तर्भूताः शक्तयो हृल्लेखास्तिस्रः, तदाद्याश्च (५)लकारास्त्रयः, (६)शाक्तैरेतैः षड्भिरक्षरैः विद्याया योगिनीत्वम् । योगिन्यश्च डाकिन्याद्याः षट् ।

अस्या(७)विद्यायाः पञ्चदशाक्षर्या अन्त्या हृल्लेखास्तिस्रः, तद्वर्जितैर्द्वादशभिर्वर्णैं राशित्वं भवेदित्यर्थः । (८)(राशयो मेषाद्या द्वादश ॥ ६६ ॥

उक्तमर्थं चक्रे व्यतिदिशति—एवमिति । एवम् उक्तरीत्या योजितगणेशादिविश्वप्रकारा महेश्वरी त्रिपुरसुन्दरी चक्ररूपा) (९)देवता । विद्यापक्षवच्चक्रपक्षेऽपि गणेशत्वादिकं योज्यमित्यर्थः । योजनाप्रकारस्तु अकथादिमय(१०)-

---

(१) 'षड्भिरथा' ख०
(२) 'योगिनि त्वं' ख०
(३) 'च सप्तविंशति' नास्ति ख०
(४) 'विद्यायाः' नास्ति क०
(५) 'लकारत्रयः' क०
(६) 'शाक्तैः' नास्ति ख०
(७) 'विद्याया इत्यर्थः । विद्यायाः' ख०
(८) धनुश्चिन्हान्तर्गतं नास्ति ख०
(९) 'देवताविद्यापक्षे । देवताचक्रपक्षे तु गणे' ख०
(१०) 'त्रिरेखा' नास्ति ख०

देव्या (१) देहे यथा प्रोक्तो गुरु (२) देहे तथैव (३) हि॥६७॥

त्रिरेखामध्यत्रिकोणरेखया गणेशत्वं, नव(४)कोणैर्ग्रहरूपत्वं, वृत्तत्रयचतुर्दशकोणबहिर्द(५)शारकोणैश्च नक्षत्ररूपत्वम् अष्टकोणैर्ब्राह्म्यादियोगिनीसंख्यैर्योगिनीत्वं, पञ्चशक्तिचतुर्वन्हिपद्मद्वयभूगृहै राशित्वम्।

पुनश्च पूर्वोक्तलक्षणमेवार्थं गुरुशिष्ययोरप्यतिदिशति—देव्या इति। देव्याः त्रिपुरसुन्दर्याः (६) देहे स्वेच्छा(७)गृहीतलीलाविग्रहे यथा प्रोक्ता(८)

"एकादशाधिकशतदेवतात्मतया पुनः(९)।
गणेशत्वं महादेव्याः"।

इत्यादिना।

गृणते तत्त्वमात्मीयमात्मीकृतजगत्त्रयम्।
उपायोपेयरूपाय शिवाय गुरवे नमः॥

इत्यभियुक्तवचनोक्तरीत्या (१०) देवतादेहस्यैव गुरुत्वाद्गुरुदे-

(१) 'देहो' ख०
(२) 'देहस्त' ख०
(३) 'च' ख०
(४) 'नवचक्रैर्ग्र' ख०
(५) 'शारूपेण नक्ष' ख०
(६) 'देहे' नास्ति ख०
(७) 'गृहीतविग्रहो' ख०
(८) 'प्रोक्ता' नास्ति ख०
(९) 'पुनः' इत्यस्याग्रे 'इति गणेश इतिशब्दः प्रसक्तपरिसमाप्तिपरः, एवंशब्दः पूर्वोक्तप्रकारानुवादनपरः' इति कपुस्तके यद्यप्यधिकमुपलभ्यते तथाऽपि तस्य ग्रन्थस्य ६७ श्लोकोत्तरार्धव्याख्यानभूततया तत्र तस्योपलब्धेश्च तस्यात्र लेखनं लेखकप्रमादमूलकमिति भासते।
(१०) 'देवतारूपस्यैव' ख०

तत्प्रसादाच्च शिष्योऽपि तद्रूपः (१)संप्रजायते ॥

इत्येवं कौलिकार्थस्तु कथितो वीरवन्दिते ॥६८॥

(२)देहेऽपि यथा देव्या देहे गणेशत्वादिकं योजितं (३)तथैव (४)तद्रूपस्य गुरोरपि देहे तद्योज्यमित्यर्थः ॥ ६७ ॥

तत्प्रसादात्—

स्वप्रकाशवपुषा गुरुः शिवो यः प्रसीदति पदार्थमस्तके ।

तत्प्रसादमिह तत्त्वशोधनं प्राप्य मोदमुपयाति भावुकः ।

इत्य(५)स्मद्गुरूक्तरीत्या प्राप्तगुरुप्रसादः शिष्यस्तद्रूपो देवतारूप एव संप्रका(६)शते इत्यर्थः । अतो यथा देव्या (७)गुरोश्च देहे गणेशत्वादिकं (८)योजितं तथैव शिष्यदेहेऽपि योजनीयमित्यर्थः ।

कौलिकार्थमुपसंहरति—इत्येवमिति । इतिशब्दः प्रसङ्गपरिसमाप्तिपरः, एवंशब्दः पूर्वोक्त(९)प्रकारानुवादनपरः, शेषं स्पष्टम् ॥६८॥

(१०)अत्र क्रमप्राप्त(११)सर्वरहस्यार्थं(१२)वक्तुं प्रतिजानीते—

---

(१) 'संप्रकाशते' ख०

(२) 'देहोऽपि देव्या देहवत् गणेश' ख०

(३) 'तथैव' नास्ति ख०

(४) 'तद्रूपो गुरुदेहोऽपि तथेष्ट इत्यर्थः' ख०

(५) 'स्मदुक्त' ख०

(६) 'शते इति । यथा' ख०

(७) 'गुरोश्च' नास्ति ख०

(८) 'योज्यं' ख०

(९) 'प्रकार' नास्ति ख०

(१०) 'अत्र' नास्ति ख०

(११) 'सर्व' नास्ति ख०

(१२) 'र्थमाह तथा' ख०

तथा सर्वरहस्यार्थं कथयामि तवानघे ॥
मूलाधारे तडिद्रूपे वाग्भवाकारताङ्कते ॥ ६९ ॥
अष्टत्रिंशत्कलायुक्तपञ्चाशद्वर्णविग्रहा ॥
(१)विद्या कुण्डलिनीरूपा मण्डलत्रयभेदिनी ॥ ७० ॥

---

तथेति । तथाशब्दः पूर्वोक्तार्थप्रकारपरामर्शार्थः । सर्वरहस्यार्थं पूर्वोक्त सर्वार्थेभ्यो रहस्यं परमाप्तिरूपत्वात् ।

सर्वरहस्यार्थमेवाह—मूलाधारे इति । मूलाधारे पूर्वोक्तलक्षणे तडिद्रूपे(२)विद्युद्वर्णे, वाग्भवाकारताङ्कते वाचः परापश्यन्तीमध्यमावैखर्यः (३)ताभिर्भवं, वाग्भवं त्रिकोणम् । तदुक्तमत्रैव "आत्मनः स्फुरणम्" इत्यादि

"क्रियाशक्तिस्तु रौद्रीयं वैखरी विश्वविग्रहा"

इत्यन्तेन तदाकारताङ्कते तद्रूपेण परिणते ॥ ६९ ॥

अष्टत्रिंशत्कला(४)युक्ताः वन्हेर्धूम्रा(५)र्चिराद्या दश, सूर्यस्य तपिन्याद्या द्वादश, सोमस्यामृताद्याः षोडश, एवमेता अष्टात्रिंशत्कलाः (६)ताभिर्युक्ताः पञ्चाशद्वर्णाः, सोमकलाभिः षोडशभिर्युक्ता अकारादयः षोडश स्वराः, एवमेते पञ्चाशद्वर्णा विग्रहो यस्याः सा तथा (७)विद्या सौभाग्यविद्या ।

---

(१) 'कुलकुण्ड' ख०
(२) 'विद्युत्सवर्णवर्णे' ख०
(३) 'ताभिर्वाग्भिर्भवन्तीति वाग्भवं' ख०
(४) 'युक्ता' नास्ति ख०
(५) 'र्चिरा' नास्ति ख०
(६) 'ताभिर्युक्तैः पञ्चाशद्वर्णैः इकारादिक्षकारान्तैर्वन्हिकलाभिर्दशभिर्युक्ता यादयो दशवर्णाः सूर्यकलाद्वादशभिर्युक्ताः क्रमोत्क्रमकभाद्याश्चतुर्विंशतिवर्णाः सोमकला' ख० (७) 'विद्या' नास्ति ख०

तडित्कोटिनिभप्रख्या बिसतन्तुनिभाकृतिः ॥
व्योमेन्दुमण्डलासक्ता सुधास्रोतःस्वरूपिणी ॥ ७१ ॥

---

स्वरव्यञ्जनभेदेन (१)(सप्तत्रिंशत्प्रभेदिनी ।
सप्तत्रिंशत्प्रभेदेन) षट्त्रिंशत्तत्त्वरूपिणी ॥

इतिपूर्वोक्तरीत्या षट्त्रिंशत्तत्त्वावयवत्पञ्चाशदक्षरमयवैखर्यात्मिका (२)कुण्डलिनीरूपा ।

तस्य मध्ये वन्हि(३)शिखा अणीयोर्ध्वा व्यवस्थिता ।
(४)नीलतोयदमध्यस्थविद्युल्लेखेव भास्वरा ॥
नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा ।

(५)इति श्रुत्युक्तरीत्या भुजङ्गभोगसदृशी ज्योतिर्लतामण्डलत्रयभेदिनी मण्डल(६)त्रयं मूलहृदयभ्रूमध्यस्थितानां वन्हिसूर्यसोममण्डलानां त्रयं तद्भेदिनी मण्डलत्रयं भित्त्वा तन्मध्यमार्गेण अकुलं प्रवेष्टुमुद्यतेत्यर्थः । तडित्कोटिनिभप्रख्या (७)तडित्कोटीनां निभा सदृशा प्रख्या कान्तिर्यस्याः सा, बिसतन्तुनिभाकृतिः बिसतन्तुवत्सूक्ष्मरूपा व्योमेन्दुमण्डलासक्ता

(८)ललाटोर्ध्वं समारभ्य कपालोर्ध्वावसानकम् ।
द्व्यङ्गुलोर्ध्वे शिरोदेशे परं व्योम प्रकीर्तितम् ॥

---

(१) धनुश्चिन्हान्तर्गतं नास्तिख०
(२) 'कुलकुण्ड' ख०
(३) 'शिखात्मना योर्ध्वं व्यव'ख०
(४) 'निलीना पद्मध्य' ख० इदमर्धं च 'नीवार' इत्यर्धस्याग्रे, ख०
(५) 'इत्यस्मदुक्त' ख०
(६) 'मण्डलत्रयमाधारत्रयं' ख०
(७) 'तडितां कोटीनां प्रख्या भासा तस्या निभा सदृशी, बिस'ख०
(८) 'द्वादशीतं ललाटोर्ध्वं कपालो' ख०

सदा (१)व्याप्तजगत्(२)कृत्स्ना सदानन्दस्वरूपिणी ॥
एषा स्वात्मेति बुद्धिस्तु रहस्यार्थो महेश्वरि ॥ ७२ ॥

इति स्वच्छन्दसङ्ग्रहोक्तरीत्या परे व्योम्नि यदिन्दुमण्डलं चिच्चन्द्रबिम्बं तत्रासक्ता सुधास्रोतःस्वरूपिणी तद्विगलितामृतप्रवाहरूपा सदाऽव्याप्तजगत्कृत्स्ना सदा कालत्रयेऽपि षट्त्रिंशत्तत्त्वात्मकं जगत् कृत्स्नं व्याप्तं ययेति शेषः । सदानन्दस्वरूपिणी (३) सदानन्दः परमशिवः स्वरूपं यस्याः सा सदानन्दस्वरूपिणी । एषा (४)चिन्मयी कुण्डलिनी (५)शक्तिः स्वात्मेति बुद्धिः तदात्मतया समावेशो रहस्यार्थ(६)इत्यर्थः । तदुक्तं चतुःशतिशास्त्रे—

यदोल्लसति शृङ्गार(७)पीठे कुण्डलरूपिणी ।
शिवार्कमण्डलं भित्त्वा द्रावयन्तीन्दुमण्डलम् ॥
तदद्भुतामृतस्यन्दपरमानन्दनन्दिता ।
कुलयोषित्कुलं त्यक्त्वा (८)परं पुरुषमेति सा ॥
निर्लक्षणं निर्गुणञ्च कुलरूपविवर्जितम् ।
ततः स्वच्छन्दरूपा तु तद्विभ्राम्य जगत्प्रभुम् ॥
(९)तेन मार्गेण संतुष्टा पुनरेकाकिनी सती ।

(१) 'व्याप्तं' ख०
(२) 'कृत्स्नं' ख०
(३) 'स्वसंविदानन्दस्य भावः सदानन्दः' क०
(४) 'चिन्मयी' नास्ति ख०
(५) 'शक्तिरितिबुद्धिः स्वात्मे' ख०
(६) 'इत्यर्थः' नास्ति ख०
(७) 'पीठाकुलितरूपिणी' ख०
(८) 'परं गृह्यं जगत्पतिम्' इति खपुस्तके, तत्रैव पाठान्तरतया च 'परं पुरुषमेति सा' इति ।
(९) इदमर्धं 'निर्लक्षणं निर्गुणं च' इत्यर्धात्पूर्वं वर्तते ख०

महातत्त्वार्थं इति यत्तच्च देवि वदामि ते ॥
निष्कले परमे सूक्ष्मे निर्लक्ष्ये भाववर्जिते ॥ ७३ ॥
व्योमातीते परे तत्त्वे प्रकाशानन्दविग्रहे ॥
विश्वोत्तीर्णे विश्वमये तत्त्वे स्वात्मानियोजनम् ॥ ७४ ॥

---

रमते सेयमव्यक्ता त्रिपुरा व्यक्तिमागता ॥ (१)इति ॥७०॥ ॥ ७१ ॥ ७२ ॥

अथ क्रमप्राप्तं महातत्त्वार्थं वक्तुं प्रतिजानीते—महातत्त्वेति। स्पष्टम्।

महातत्त्वार्थमेवाह—निष्कले इति। निष्कले निरवयवे कलाः अवयवाः परमे महद्भ्योऽपि महीयसि सूक्ष्मे अणोरप्यणीयसि, निर्लक्ष्ये करणेन्द्रियाद्यगोचरे (२)भाववर्जिते "भावनाग(३)ममतीन्द्रियं च यल्लक्ष्यमुक्तम्" इति चिद्गगनचन्द्रिकोक्तरीत्या भावनागम्ये व्योमातीते व्योम पूर्वोक्तलक्षणं तदतीते परे तत्त्वे सकलतत्त्वा(४)तीते परमार्थे प्रकाशानन्दविग्रहे प्रकाशो ज्योतिषां ज्योतिरनुत्तरा, आनन्दः सकलवैषयिकानन्दसमष्टिभूतपरमानन्दता, प्रकाशानन्दो विग्रहो यस्य तस्मिन् विश्वोत्तीर्णे विमुक्तसकलजगदुत्तीर्णे विश्वमये तथापि—

देशकालपदार्थात्मा यद्यद्वस्तु यथा यथा।
तत्तद्रूपेण या भाति तां श्रयेत्संविदं (५)कलाम् ॥

---

(१) 'इति' नास्ति क०
(२) 'भाववर्जिते' नास्ति ख०
(३) 'गम्ये अती' क०
(४) 'तीते सकलतत्त्वार्थपर' ख०
(५) 'श्रयेत्संविदं कलाम्' ख०

तदा प्रकाशमानत्वं तेजसां तमसामपि ॥
अविनाभवरूपत्वं तस्माद्विश्वस्य सर्वतः ॥ ७५ ॥

---

इति प्रामाणिकोक्तवचनरीत्या तत्तदात्मनाऽवभासमाने तत्त्वे "तत्त्वमसि" इत्युपनिष(१)द्वाक्यपरमार्थ (२)(परविद्याप्रदायकपरमशिवरूपे निजगुरुप्रबोधितनिर्मलस्वभावस्वात्मानियोजनं तदेकतानुप्रवेशः महातत्त्वार्थ ) इत्यर्थः ॥ ७३ ॥ ७४ ॥

नन्वेवंविधपरलक्षणं स्वात्मतत्त्वं केन प्रमाणेनावसीयत इयत आह–तदेति । (३)यदा शिवः सर्वप्राणिनां (४)चित्ते परिस्फुरति तदा आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेति तन्त्रान्तरोक्तरीत्या तेजसां सूर्यादीनां तमसां घटादीनां जडानामपि प्रकाशमानत्वं चित्ते चिदात्मनि परमशिवे प्रथमं परिस्फुरति सत्येव तत्तादिन्द्रियद्वारा तत्तदर्थानां परिस्फुरणम् । अत्र श्रुतिः "तमेव भान्तमनुभाति सर्वं, तस्य भासा सर्वमिदं विभाति" इति । तस्मात्सर्वतः सर्वस्य विश्वस्य उक्तलक्षणस्याविनाभावरूपत्वं विना न भवतीत्यविनाभावः । कोऽर्थः? विश्वमिदं द्रष्टुः सापेक्षप्रतीतिकं दृश्यत्वाद् यद्यद् दृश्यं तत्तद् द्रष्टुः सापेक्षप्रतीतिकं, यथा संप्रतिपन्नो घटः, यद् द्रष्टृसापेक्षप्रतीतिकं न भवति तद् दृश्यमपि न भवति यथा शशविषाणमित्यादि अन्वयव्यतिरेकसिद्धेनानुमानप्रमाणेनावसीयते इत्यर्थः ॥७५॥

अथवा अलं प्रमाणचिन्तया, प्रमाणानामपि चिदनुप्रवेशो-

---

(१) 'षड्वाक्यार्थः परमार्थ' ख०
(२) धनुश्चिह्नान्तर्गतं नास्ति खपुस्तके ।
(३) 'यदा स सर्वं' ख०
(४) 'चित्तोपरि आत्मा' ख०

प्रकाशते महातत्त्वं दिव्यक्रीडारसोज्ज्वले ॥

नैव प्रमाणत्वात्(१)तेषामप्येतत्सद्भावं साधयितुमलं, तस्य प्रकाशरूप(२)त्वादाह- प्रकाशते इति । महातत्त्वं देशकालाकारैर्निरवच्छिन्नं तत्त्वं प्रकाशते (३)स्वयमेव, तेन विना न तत्किमपि प्रकाशयितुमलम् । तस्यैव प्रकाशेन(४) सर्वत्र प्रकाशात् । अत्र श्रुतिस्मृती–"तस्य भासा सर्वमिदं विभाति" इति ।

'न तद्भासयते सूर्यो न शशाङ्को न पावकः ।'

इति च । अभियुक्तवचोऽपि—

अवधानैकतानानां मतिरेवात्र साक्षिणी ।
किं प्रमाणैर्वराकैस्तैश्चिदनुमाणितात्मभिः ॥
न हि वैकर्तनं ज्योतिर्दीपालोकमपेक्षते । इति

दिव्यक्रीडारसोज्ज्वले(५) देव्याः संबुद्धिः । दिवि भवो दिव्यः परमशिवः तस्य क्रीडा विश्वसर्जनादिव्यवहारक्रियात्मिका चिच्छक्तिः,तयो रसः सामरस्यं, तेनोज्ज्वले नित्यं शिवशक्तिसामरस्यपरायण(६)प्रतीते देवि इत्यर्थः ।

ननु महातत्त्वार्थ(७)विज्ञानस्य फलं यागादिकर्मणामिव देहान्तरदेशान्तरकालान्तरभावि( ८ )प्रत्ययः किन्नेत्याह—

(१) 'तेषामपि स्वरूपमेतत्सद्भावं' ख०
(२) 'त्वादित्याह' ख०
(३) 'स्वत एवेति विना न किमपि' ख०
(४) 'प्रकाशेन प्रकाश्यन्ते सर्वाण्यपि' क०
(५) 'ज्ज्वले दिवः सम्बन्धेन भवो' ख०
(६) 'प्रतिभेदे इत्यर्थः' क०
(७) 'वि' नास्ति ख०
(८) 'प्रत्ययो ने' ख०

निरस्तसर्वसंकल्पविकल्पास्थितिपूर्वकः ॥ ७६ ॥
रहस्यार्थो (१)मया गुप्तः सद्यः प्रत्ययकारकः ॥
महाज्ञानार्णवे दृष्टः शङ्का तत्र न पार्वती ॥ ७७ ॥
विद्यापीठनिबद्धेषु संस्थितो दिव्यसिद्धिदः ॥

---

**निरस्तेति**। इदमहं करिष्यामीति मानसं कर्म संकल्पः, एवं मया कर्तव्यं न वेति कोटिद्वयावलम्बि ज्ञानं विकल्पः, शिवस्वातन्त्र्याभावहेतुकाले तौ निरस्तौ यत्परिज्ञानमात्रतः तदुभयनिरासादेव मनःस्थैर्यं स्थितिः जायते तत्पूर्वको रह(२)स्यार्थः आकर्णनयोग्यो न भवति, अत एव (३)मया गुप्तः (४)न कस्यापि कथितः अत्यन्तयत्नेन रक्षितः सद्यःप्रत्ययकारकः एतदाकर्णनेन शिवोऽहमस्मीति प्रत्ययः सद्य एव समुदेतीत्यर्थः।

नन्वयमर्थः कुत्र स्थितः ? कुत्र वा दृष्टस्त्वया ? किं वा तस्य फलम् ? इत्यत आह—**महाज्ञानेति** । विद्यैव पीठं विद्यापीठं शिवयोर्विश्रान्तिस्था(५)नत्वात् तन्निबध्यते येषु तानि तदवयवभूतानि वाग्भवकामराजशक्त्याख्यानि बीजानि तेषु विद्यापीठनिबद्धेषु "अकुले विषुवे च" इत्यत्रोक्तरीत्या बीजत्रयाशिखरवर्तिबिन्द्वर्धचन्द्ररोधिनीनादनादान्तशक्तिव्यापिकासमनोन्मनाक्रमेणानुसंधीयमानेषून्मन्यन्तदेशकालानवच्छिन्न-

---

(१) 'महागुप्तः' ख०
(२) 'स्यार्थः कर्मानर्हं आकर्णनायोग्यः अत' ख०
(३) 'महागुप्तः' ख०
(४) 'न कस्यापि कथितः' नास्ति ख०
(५) 'स्थानं तन्निबन्धनानि' ख०

(१)वस्तुपराचिदात्मकमहातत्त्वार्थः संस्थित इत्यर्थः । तदुक्तं स्वच्छन्दसंग्रहे--

यावत्सा समनाशक्तिस्तदूर्ध्वे उन्मना स्मृता ।
नात्र का(२)लकलाभावः न तत्त्वं न च देवता ॥
सुनिर्वाणं प(३)रं तत्त्वं रुद्रवक्त्रं तदुच्यते ।
शिवशक्तिरिति ख्यातं निर्विकारं निरञ्जनम् ॥
तत्त्वातीतं वरारोहे वाङ्मनोतीतगोचरम् ।
अ(४)निष्कलं चासकलं नि(?)रूपं निर्विकल्पकम् ॥
निर्द्वन्द्वं प(५)रमं शान्तं शिवाख्यं परमं पदम् ।

दिव्यसिद्धिदः दिवि निरस्तानिखिलप्रपञ्चमहाशून्ये भवतीति दिव्यः प(६)रमाशिवः पूर्वोक्तः तस्य सिद्धिः स्वाभेदेन परिज्ञानं तल्लक्षणं परमप्रयोजनं ददातीति दिव्यसिद्धिदः महाज्ञानार्णवे दृष्टः तादृशपरमशिवसामरस्यसमाधिरेव महाज्ञानं तदेवा(७)र्णवः निस्तरङ्गपारावारभूतपरमामृतपरिपूर्णत्वात्तस्मिन् दृष्टः स्वात्माहंभावभावनया भावितः । कोर्थः ? अयं परमशिवपरप्राप्तिलक्षणो महातत्त्वार्थः सौभाग्यविद्याबीजत्रयशिखरवर्तिन्युन्मन्यवसानभूमाववस्थितः तथाविधफलदो मया नित्यं समा-

---

( १ ) 'वस्तु' नास्ति ख०
( २ ) 'कालकलाभानं' ख०
( ३ ) 'परं शुद्धं रुद्र' ख०
( ४ ) 'सुनिष्कलं वा सकलं' ख०
( ५ ) 'परमं तत्त्वं' ख०
( ६ ) 'परमेश्वरः' ख०
( ७ ) 'र्णवः विस्तारः तरणपराणां परामृत' ख०

कौलाचारपरैर्देवि पादुकाभावनापरैः ॥ ७८ ॥

धिदशायां निरीक्ष्य(१)त इत्यर्थः । शङ्का तत्र न पार्वती । शङ्का तत्र त्वया न कार्या(२)इति यथार्थदर्शी यथादृष्टार्थवादी तवाहमाप्तः, तेन मदुक्ते अर्थेऽपि विश्वासः कार्य इत्यर्थः ।

नन्वयं महातत्त्वार्थो (३)मया गुप्त इत्युक्तं तर्हि कीदृशैर्लभ्यत इत्यत आह—कौलाचारेति । कुलं शरीरं महाप्रयोजनहेतुतया ज्ञेयं येषां ते कौलाः । तदुक्तं स्वच्छन्दसंग्रहे—

कुलज्ञानमथो वक्ष्ये कौलिकानां हिताय वै ।
यस्य विज्ञानमात्रेण योगोपायश्च योगिनाम् ॥
(४)योगोक्तविषयः सर्वे भवन्ति सुलभाः प्रिये ! ।
शरीरं कुलमित्युक्तम् । तेषामाचारः
सर्वेषामपि शिष्याणां दीक्षिता(५)नां कुलान्वये ।
सर्वावस्थागतानाञ्च साधार(६)णगतं शृणु ॥
गुरुभक्तिश्च शान्तिश्च पूजा श्रद्धा क्षमा धृतिः ॥

इति स्वच्छन्दसंग्रहोक्तरीत्या समयाचारपरैः पादुकाभावनापरैः ।

स्वप्रकाशशिवमूर्तिरेकिका,
तद्विमर्शतनुरेकिका, तयोः ।
सामरस्यवपुरिष्यते परा
पादुका परशिवात्मनो गुरोः ॥

( १ ) 'क्ष्यते । अतस्तत्रार्थे शङ्का त्वया' ख०
( २ ) 'इति' नास्ति क०
( ३ ) 'महागुप्त' ख०
( ४ ) 'सुगुप्ताः सिद्धयः सर्वा भवन्ति' ख०
( ५ ) 'तानामपि प्रिये' ख०
( ६ ) 'रणमतं' ख०

योगिनीमेलनोद्युक्तैः प्राप्तविद्याभिषेचनैः ॥

इत्य(१)स्मद्गुरूक्तरीत्या प्रकाशविमर्शत(२)त्समाष्टितया श्रीगुरुपादुकात्रयभा(३)वनापरैः योगिनीमेलनोद्युक्तैः

यत्र यत्र मिलिता मरीचय-
स्तत्र तत्र विभुरेव जृम्भते ।
त(४)त्सतां हि नियमावलम्बिनां
ध्यानपूजनकथा विडम्बना ॥

इति (५)प्रामाणिकवचनोक्तरीत्या मातृमानमेयसंविदो योगिन्यः, तासां मेलनम् (६) ( अन्तर्मुखभावेन परमप्रमातृविश्रान्तिः, अथवा ब्राह्मयाद्यष्टकार्चनार्थं सामैकशक्तिचक्रमेलनं ) योगिनीमेलनं, तत्रोद्युक्तैः प्रा(७)प्तविद्याभिषेचनैः लब्धपरमशिवमायगुरुवराभिमन्त्रितचिद्रसमयसकलसलिलसे (८)कात्मक्षालितम(९)लपाशैः, अत एव शङ्काकलङ्कविगतैः इदमित्थं भवेन्न भवेदित्यनवधारणज्ञानं शङ्का,सैव कलङ्कः मालिन्यहेतुत्वात् तस्माद्विगतैः अत एव सदामुदितमानसैः मेघावरणविगमनात् यथा रवेः स्वरूपं स्फुरति तथा मलपाशविगमनात्सदा येषां मनसि प्रमोदलक्षणं परमशिवस्वरूपं प्रकाशते तैरित्यर्थः ।

( १ ) 'स्मदुक्त' ख०
( २ ) 'तत्त्वसम' क०
( ३ ) 'भावना, तत्परैः' क०
( ४ ) 'तत्सतां निजसभावलम्बनं ध्यान' ख०
( ५ ) 'प्रमाणवच' ख०
( ६ ) 'धनुश्चिन्हान्तर्गतं नास्ति ख०
( ७ ) 'प्राप्तदिव्याभिषेचनैः' ख०
( ८ ) 'सेकैः ततः प्रक्षा' ख०
( ९ ) 'मलभयपा' ख०

शङ्काकलङ्कविगतैः सदामुदितमानसैः ॥ ७९ ॥

पारम्पर्येण विज्ञातरहस्यार्थविशारदैः ॥

लभ्यते, (१)नान्यथा देवि त्वां शपे कुलसुन्दरी ॥८०॥

पारम्पर्यविहीना ये ज्ञानमात्रेण गर्विताः ॥

तेषां समयलोपेन विकुर्वन्ति मरीचयः ॥ ८१ ॥

---

पारम्पर्येण विज्ञातरहस्यार्थविशा(२)रदैः शिवादिस्वगुरुप(३)र्यन्तगुरुपारम्पर्यक्रमसमा[सा]दितसकलरहस्यार्थपर्यालोचनपटुतरमतिभिः अयं महातत्त्वार्थो लभ्यत इत्यर्थः ।

कौलाचारपरैरित्याद्युक्तगुणविहीनैरयमर्थो न लभ्यत इति शपथपूर्वकमाह—नान्यथेति । (स्प(४)ष्टम्॥७६।७७।७८।७९।८०॥

ननु मास्तु पारम्पर्यक्रमं[मः,]पुस्तकपाठादिना व्युत्पत्तिबलेनापि किञ्चिन्मात्रपरिज्ञानं संपादयितुं शक्यत इत्याह—पारम्पर्येति । ) अन्यथा कौलाचारव्यतिरेकेण ज्ञानमात्रेण पुस्तकपाठोत्पन्नज्ञानमात्रेण तस्य सा(५)धकस्य सिद्धिर्न भवतीति ये पारम्पर्यविहीनाः शब्दव्युत्पत्तिबलेन किञ्चिन्मात्रपरिज्ञानेन ग(६)र्वितास्तेषां समयलोपेन "मादनं तदधः शक्तिः" इत्याद्यागमशास्त्रविहितसक(७)लमन्त्राक्षरसङ्केतपरिज्ञानाद्युच्चारणा-

---

( १ ) 'नान्यथा सिद्धिर्ज्ञानमात्रेण पार्वति' ख०

( २ ) 'शारदैः लभ्यते शिवादि' ख०

( ३ ) 'पर्यन्तपरम्परया विदितसकल' ख०

( ४ ) 'धनुश्चिन्हान्तर्गतं नास्ति ख०

( ५ ) 'साध्यस्य' ख०

( ६ ) 'गर्विताः समयः सङ्केतः मादनं' ख०

( ७ ) 'सकलमात्राक्षर' ख०

यस्तु दिव्यरसास्वादमोदमानविमर्शनः ॥
देवतातिथिनक्षत्रे वारेऽपि च वित्रस्त्वतः ॥ ८२ ॥

दिक्रमलोपेन विकुर्वन्ति मरीचयः
सर्वपीठनिवासिन्यः सर्वगाश्चिन्मरीचयः ।
भैरव्यो भ(१)रिताकारा रक्षन्तु कुलमातरः ॥

इति प्रामाणिकवचनोक्तरीत्या ब्राह्मयाद्याः डाकिन्याद्याः त्वगादिधातुदेवताः विकुर्वन्ति विकारं जनयन्ति स्वस्वधातूद्रेकरूपविकारजननेन तेषां देहं नाशयन्तीत्यर्थः ॥ ८१ ॥

ननु कस्मिन्दिने कस्मिन्नक्षत्रे कस्मिन्वासरे कौलाचारक्रमेण योगिनीमेलनं कार्यमित्यत आह—यस्त्विति । यस्तु कौलाचारपरो योगी दिव्यरसास्वादमो(२)दमानविमर्शनः दिवि परव्योम्नि भवतीति दिव्यः परमशिवः तेन रसः सामरस्यं तस्यास्वादः अनुभवस्तेन मोदमा(३)नो विमर्शनः मनोवृत्तिर्यस्य सः, प्रथमं पर(४)मशिवैक्यपरामर्शपरिस्फुरदकृत्रिमानन्दकेवलः पश्चान्मदिरानन्दघूर्णितः वक्ष्यमाणार्घ्यशुद्धिं विधाय प(५)रामृतभूतया मदिरया सम्पादितानन्दो योगी देवताति(६)थिनक्षत्रे चतुर्दश्यष्टम्यौ देवतातिथी(७), पुष्यनक्षत्रं देवतानक्षत्रम् । अत्रैव वक्ष्यति—

(१) 'भाविताकारा' ख०
(२) 'मोदमान' नास्ति ख०
(३) 'मानविमर्शनं विमर्शनं मनो' ख०
(४) 'परशिवैकपरा' ख०
(५) 'परमात्मरूपया तया' ख०
(६) 'तिथी चतु' ख०
(७) 'देवतातिथी' नास्ति ख०

मरीचीन्प्रीणयत्येव मदिरानन्दघूर्णितः ॥
सर्वदा च विशेषेण लभते पूर्णबोधताम् ॥ ८३ ॥
एवंभावस्तु देवेशि देशिकेन्द्रप्रसादतः ॥

---

(१)पुष्यभेन तु वारे च सौरे च परमेश्वरि ।
गुरोर्दिने स्वनक्षत्रे चतुर्दश्यष्टमीषु च ॥
चक्रपूजा विशेषेण योगिनीनां समाचरेत् । [इति] ॥८२॥

मरीचीन्प्रीणयत्येव । एवकारोऽयोगव्यवच्छेदपरः। उक्तकालेषु सर्वदा योगिनीप्रीणनं कुर्यात् । अन्यथा प्रत्यवायो भवेदित्यर्थः । कालविशेषकथनं नैमित्तिक(२)विशेषपूजाद्योतनार्थम् । सर्वदा च मरीचीन[नां]प्रीणनं कुर्यादेव (३)एवकारेणान्वयः । नित्यार्चनाकरणे प्रत्यवायोऽस्तीति तात्पर्यम् ।

नित्यार्चनायां लुप्तायां सासनां साद्गतं क्रमात् ।

इति स्वच्छन्दसंग्रहोक्तरीत्या प्रायश्चित्तस्य(४)कर्तव्यत्वात् । अकरणे तु प्रत्यवाय एव भवति, करणे तु फलमस्तीत्याह-लभते पूर्णबोधतामिति ।

यत्र निर्विषयबोधलक्षणं स्वात्मशंभुरवतिष्ठतेऽनिशम् ।

इत्यस्मद्गुरूक्तरीत्या निरावरणचिद्रूपस्वात्मशम्भुत्वं प्राप्नोतीत्यर्थः ॥ ८३ ॥

ननु पूर्णबोधः केन वा कियता कालेन कैर्वा सम्प्राप्यत इत्यत आह—एवंभावस्त्विति । एवंभावः पूर्णबोधत्वं देशिके-

---

(१) 'नित्यं पुष्ये दिने वारे सौरे च' ख०
(२) 'विशेष' नास्ति ख०
(३) 'चकारः एव' क०
(४) 'कर्तव्यत्वविधानात्' ख०

महाज्ञानमयो देवि सद्यः संप्राप्यते नरैः ॥ ८४ ॥
एवमे (१)तत्प्रदं ज्ञानं विद्यार्णागमगोचरम् ॥
देवि गुह्यप्रियेणैव व्याख्यातं दुर्गे षड्विधम् ॥

न्द्रप्रसादतः यस्य करुणाकटाक्षपातमात्रेण पाशजालं छिद्यते सः परमशिवः केवलो देशिकेन्द्रः तत्प्रसादतः ।

स्वप्रकाशवपुषा गुरुः शिवो
य: प्रसीदति पदार्थमस्तके ।
तत्प्रसादमिह तत्त्वबोधनं
प्राप्य मोदमुपयाति भावुकः ॥

इत्यस्मद्गुरूक्तरीत्या तत्प्रसादग्रहणेन महाज्ञानमयो निरावरणचिन्मयः (२)नरैः 'कौलाचारपरैः' इत्यादिपूर्वोक्तविशेषणविशेषितैः सद्यो देशिकेन्द्रप्रसादसमवाप्तिसमय एव सम्प्राप्यते॥८४॥

मन्त्रसङ्केतमुपसंहरति—एवमेतदिति । एवम् उक्तप्रकारेण (३)एतत्प्रदं परिपूर्णबोधलक्षणपरशिवप्रदं ज्ञानं (४)विद्यार्णागमगोचरं विद्याया वर्णाः पञ्च(५)दश वर्णाः त एवागमाः महार्थबोधकत्वात्, तद्गोचरं तदर्थतया, व्याख्यातं

यद्वेत्ता त्रिपुराकारो वीरचक्रेश्वरो भवेत् ।

इत्यारभ्य "एवमेतत्प्रदम्" इत्यन्तश्लोकजालेन, षड्विधं "भावार्थः संप्रदायार्थः" इत्यादिना प्रतिपादितषट्प्रकारं देवि

(१) 'तत्परं ज्ञानं' ख०
(२) 'नरैः' नास्ति ख०
(३) 'एतत्परं' ख०
(४) 'विद्यार्णागमगोचरं' ख०
(५) 'दश अत ए' ख०

सद्यो यस्य प्रबोधेन वीरचक्रेश्वरो भवेत् ॥ ८५ ॥

---

प्रकाशविमर्शसामरस्यरूपे परे दुर्गे देशिकेन्द्रकटाक्षपातविहीनैरप्राप्यरूपे ।

सद्यो यस्य प्रबोधेन षड्विधा(१)र्थस्य प्रबोधेन वीरचक्रेश्वरो भवेत् इदन्तारिपोरहमि समराङ्गणे प्रलयप्रतिपादनपरा वीरास्तेषां चक्रं समूहः तस्येश्वरः परमशिवः, पूर्वोक्तषड्विधार्थविज्ञानसमय एव परमशिवो भवेदित्यर्थः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्य(२)श्रीपुण्या-
(३)नन्दनाथशिष्यामृतानन्द(४)नाथयोगि-
प्रवरविरचितायां योगिनीहृदयदी-
पिकायां मन्त्रसङ्केतो नाम
(५)द्वितीयः पटलः ॥



---

( १ ) 'र्थस्य बोधेन वीर' ख०
( २ ) 'श्री' नास्ति ख०
( ३ ) 'नन्दयोगिप्रवरशिष्या' ख०
( ४ ) 'नाथ' नास्ति ख०
( ५ ) 'द्वितीयः समाप्तः' ख०

पूजासङ्केतमधुना कथयामि तवानघे ॥
यस्य प्रबोधमात्रेण जीवन्मुक्तः प्रमोदते ॥ १ ॥
तव नित्योदिता पूजा त्रिभिर्भेदैर्व्यवस्थिता ॥
परा चाप्यपरा गौरि तृतीया च परापरा ॥ २ ॥

---

अथ क्रमप्राप्तं पूजासङ्केतं वक्तुं प्रतिजानीते—पूजासङ्केतमिति । स्पष्टम् ।

श्रोतृजनप्रवृत्तये फलमाह—यस्येति । यस्य पूजासङ्केतस्य प्रबोधमात्रेण (१)वक्ष्यमाणपरादित्रिविधभेदवतः केवलपरिज्ञानेनैव जीवन्नेव मुक्तः जीवन्मुक्तः सन् शिवोऽहमस्मीति (२)मतिमान् प्रमोदते परशिवाहन्तामतिरेव तु प्रमोदहेतुः ॥ १ ॥

पूजासङ्केतमारभते-तव नित्योदितेति । प्रकाशात्मनो(३) मम विमर्शशक्तेः विमर्शरूपिण्याः (४) यच्छक्तेस्तव नित्योदिता पूजा नित्यं प्रत्यहमुदिता विहिता पूजा त्रिभिर्भेदैर्व्यवस्थिता ।

पूजानामान्याह—परा चाप्यपरेति । प्रथमा पूजा परा उत्तमोच्यते परमशिवाद्वैत(५)प्रथात्मकत्वादितरपूजाभ्यामुत्तमत्वम् । तदुक्तं सङ्केतपद्धत्याम्—

(६)न पूजा बाह्यपुष्पादिद्रव्यैर्या प्रथिताऽनिशम् ।

---

( १ ) 'वक्ष्यमाण' नास्ति ख०
( २ ) 'मतिमान्' नास्ति ख०
( ३ ) 'मम विमर्शशक्तेः नास्ति' क०
( ४ ) 'यच्छक्तेः' नास्ति ख०
( ५ ) 'प्रथाप्रापकत्वात् । तदुक्तं' ख०
( ६ ) ' न पूजा बाह्यपुष्पादिद्रव्यैर्या विहितानिशम् । स्वे महत्यद्वये' ख०

प्रथमाद्वैतभावस्था सर्वप्रसरगोचरा ॥
द्वितीया चक्रपूजा च सदा निष्पाद्यते मया ॥ ३ ॥

---

स्वे महिम्न्यद्वये धाम्नि सा पूजा या परा (१)स्थिता ॥ इति ।

अपरा द्वितीया पूजा भेद(२)प्रथामात्रसारा बाह्यचक्रावरणार्चनारूपा अधमा ।

न पूजा बाह्यपुष्पादिद्रव्यैर्या प्रथितानिशम् ।

इति (३)पूर्वोक्तवचनात् । तृतीया पूजा परापरा । बाह्यस्यान्तरे धाम्न्यद्वये (४)चिल्लयभावनामयी मध्यमा परापरात्मकत्वात् ॥ २ ॥

तासां लक्षणानि क्रमेणाह–प्रथमाद्वैतेति । आत्मा मनसा युज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेति पूर्वोक्तपरिपाट्या सर्वेषामिन्द्रियाणां ये (५)प्रसराः व्यापारास्तेषां गोचरीभूता । कोऽर्थः ?

यत्र यत्र मनो याति बाह्ये वाभ्यन्तरे प्रिये ।
तत्र तत्र परावस्था व्यापकत्वात्क्व यास्यति ॥
तत्र तत्राक्षमार्गेण चैतन्यं व्यज्यते प्रभोः ।
तस्य तन्मात्र(६)धर्मित्वाच्चिल्लयाद्भारिता(७)स्थिता ॥

इति विज्ञानभैरवभट्टारकोक्त(८)रीत्या चिल्लयलक्षणाद्वैतप्रथा-

---

( १ ) 'स्थितिः' ख०
( २ ) 'भेदप्रसरा' ख०
( ३ ) 'पूर्वोक्त' नास्ति ख०
( ४ ) 'विलय' क०
( ५ ) 'प्रसराः' नास्ति ख०
( ६ ) 'त्ररूपत्वा' ख०
( ७ ) 'मतिः' ख०
( ८ ) 'रीत्या बाह्यस्य चि' ख०

एवं ज्ञानमये देवि (१)तृतीया तु परापरा ॥
उत्तमा सा परा ज्ञेया विधानं शृणु साम्प्रतम् ॥ ४ ॥

परा पूजेत्यर्थः ।

द्वितीयेति । द्वितीया च(२)क्रपूजा अपरा पूजा चतुरस्रादिबैन्दवान्तश्रीच(३)क्रसदनावरणदेवतार्चनमपरा पूजेत्यर्थः। सदा निष्पाद्यते मया सदा प्रत्यहं मया सर्वज्ञेनापि निष्पाद्यते (४)क्रियते अभेदप्रतीतिबोधकत्वात् । अभेदप्रतीत्यर्थमपरा पूजा सदा सर्वैरपि ज्ञानिभिः कार्येत्यर्थः । अन्यथा अद्वैतमिति प्रसक्तप्रतिषेधः स्यात्, न च तथा युक्तम् । तदुक्तं तन्त्रावलोके—

लब्धरूपे क्वचित्किञ्चित्ताद्दगेव निषिध्यते ।
विधानमन्तरेणातो न निषेधस्य संभवः ॥ ३ ॥

परापरपूजामाह—एवमिति । एवं ज्ञानमये पूर्वोक्ताद्वैतभावनामये (५) धाम्नि बाह्यस्य पृथगा(६)त्मकावरणार्च(७)नारूपस्य कर्मणः ज्ञानमयताविश्रान्तिः तृतीया परापरा पूजा । तदुक्तमभियुक्तैः—

प्रकाशैकघने धाम्नि (८)विकल्पप्रसरादिकान् ।
निक्षिपेत्स्वार्चनद्वारा वन्हाविव घृताहुतीः ॥ इति ।

पूजाविधानमाह—उत्तमेति । उत्तमा सा परा पूजा परापू-

---

(१) 'तृतीया स्वप्रथामयी' ख०
(२) 'चक्रपूजा' नास्ति ख०
(३) 'चक्रपदनिवास्यावरणदेवतानामतोऽपरा' ख०
(४) 'क्रियते प्रबोधकत्वात्' ख०
(५) 'धाम्नि स्वप्रथामयी बाह्यस्य' ख०
(६) 'त्मका' नास्ति ख०
(७) 'र्चनद्वारा वन्हाविव ज्ञान' ख०
(८) 'विकल्पान् प्रसवादिकान्' ख०

महापद्मवनान्तस्थे वाग्भवे गुरुपादुकाम् ॥
आप्यायितजगद्रूपां परमामृतवर्षिणीम् ॥ ५ ॥

---

जाया उत्तमत्वकथनादितरयोरपरापरापरपूजयोरधमत्वं मध्यमत्वं चोपलक्षयति । सा ज्ञेया (१)ज्ञानगम्या परापूजा पश्चाद्वक्ष्यते । अस्या ज्ञेयत्वात् परत्वमत एवोत्तमत्वञ्चेत्यर्थः । साम्प्रतं ज्ञेयायाः पूजाया विधानं शृणु ॥ ४ ॥

विधानमेव विवृणोति–महापद्मेति । महापद्मवनं ब्रह्मरन्ध्राधोमुखसितसहस्रदलाकुलकमलं पद्मदलैराकुलत्वाद् व(२)नमिव वनम् । तदुक्तं स्वच्छन्दसंग्रहे—

यावदूर्ध्वाकुलं पद्मं सहस्रारमधोमुखम् ।
श्वेतं च निष्कलाशक्तिमध्यं चासङ्ख्यशक्तिकम् ॥
व्यापिनी केवलं शश्वदमृतौघ(३)प्रहर्षिणम् ।
महापद्मवनं चैव समना तस्य चोपरि ।
तस्यान्तःकर्णिकामध्ये तत्स्थे (४)वाग्भवरूपिणि ॥

इति पूर्वोक्तरीत्या वाचः परापश्यन्तीमध्यमावैखर्यो भवन्त्यस्मादिति वाग्भवं त्रिकोणं तत्र गुरुपादुकाम्

गृणते तत्त्वमात्मीयमात्मीकृतजगत्त्रयम् ।
उपायोपेयरूपाय शिवाय गुरवे नमः ॥

इत्यभियुक्तवचनोक्तरीत्या विश्वगुरोः परमशिवस्य पादु-

---

(१) 'ज्ञानकामकार्या अपरा' ख०
(२) 'वनमिति तदुक्तं' ख०
(३) 'प्रवर्षिणमि' ख०
(४) 'वाग्भवे पूर्वोक्त' क०

सञ्चिन्त्य परमाद्वैतभावनामृतघूर्णितः ॥

(१)काम् ।

स्वप्रकाशशिवमूर्तिरेकिका
तद्विमर्शतनुरेकिका तयोः ।
सामरस्यवपुरिष्यते परा
पादुका परशिवात्मनो गुरोः ॥

इत्य(२)स्मद्गुरूक्तरीत्या त्रिभेदवतीमाप्यायितजगद्रूपां (३)शिशिरतरनिशाकररश्मिनिफालनात् प्रसरणात् आप्यायिताम् (४)अनुप्राणितचराचरां परमामृतवर्षिणीं निरन्तरनिबिडचिद्रसासारवर्षिणीं संचिन्त्य स्वात्मतया (५)विमृश्य गुरुपादुकापरामर्शनानन्तरमेव प्रसादस्वीकारमाह— परमाद्वैतेति । परमशिवस्तेनाद्वैतभावना सैवाहमस्मीति समावेशरूपा सैवामृतमित्यभिव्यज्यते मदहेतुत्वात्तत्कृतेन मदेन घूर्णितः मुदितः ।

स्वप्रकाशवपुषा गुरुः शिवो
यः प्रसीदति पदार्थमस्तके ।
तत्प्रसादमिह तत्त्वशोधनं
प्राप्य मोदमुपयाति भावुकः ॥

इति (६)अस्मद्गुरूक्तरीत्या परमशिवाद्वैतभावनालक्षणगुरुप्रसादस्वीकारसमुल्लसत्परमानन्दपरवश इत्यर्थः ।

---

(१) पादुकां' नास्ति ख०
(२) 'स्मदुक्त' ख०
(३) 'शिशिरनिजरश्मि' ख०
(४) 'अनुप्राणित' नास्ति ख०
(५) 'विचिन्त्य' ख०
(६) 'अस्मदुक्त' ख०

दहरान्तरसंसर्पन्नादालोकनतत्परः ॥ ६ ॥
विकल्परूपसंजल्पविमुखोऽन्तर्मुखः सदा ॥

---

प्रसादस्वीकारानन्तरमान्तरजपमेवाह—दहरान्तरेति ।

दहरं (१)विपाप्मं परवेश्मभूतं
हृत्पुण्डरीकं पुरमध्यसंस्थम् ॥ इति ।

"दहरोऽस्मिन्नन्तराकाश" इति श्रुत्युक्तरीत्या हृदयाब्जमध्यगतमाकाशं दहरमित्युच्यते दहरमेव दहरं तदन्तरे संसर्पन्नादस्तस्यालोकनं विभावनं तत्र तत्परः । तदुक्तमभियुक्तैः—

आनन्दलक्षणमनाहतनाम्नि देशे
नादात्मना परिणतं तव रूपमीशे ।
प्रत्यङ्मुखेन मनसा परिचीयमानं
शंसन्ति नेत्रसलिलैः पुलकैश्च धन्याः ॥ (२)इति ।
संयम्येन्द्रियसञ्चारं प्रोच्चरेन्नादमान्तरम् ।
(३)एष एव जपः प्रोक्तो न तु बाह्यजपो जपः ॥

इत्यभियुक्तवचनोक्तरीत्या आन्तरं नादानुसंधानलक्षणं जपं कुर्यात् । न तु नानाविधोच्चारणलक्षणं बाह्यजपं कुर्यात् । विकल्पेति । विकल्परूपाणां नानाविधरूपाणामक्षराणां संजल्प उच्चारः तल्लक्षण(४)बाह्यजपविमुखः । तदुक्तं (५)(विज्ञानभैरवभट्टारकैः—

---

(१) 'विपापं' ख०
(२) 'इति' नास्ति ख०
(३) 'एवमेव' ख०
(४) 'बाह्य' नास्ति ख०
(५) धनुश्चिन्हान्तर्गतं नास्ति ख०